...श्रीमद् गुरुनाथ विद्यानिधि-सम्पादिता ।

मूल्यं पादोनरूप्यकम्— ॥०

# छन्दोमञ्जरी ।

वैद्यमहामहोपाध्याय—
श्रीमद्‌-गङ्गादास विरचिता ।

श्रीमद्‌-गुरुनाथविद्यानिधि-भट्टाचार्य्यकृत-
टीकानुवादप्रभृतिभिः समलंकृता

कलिकाता, निवेदिता लेनस्थित संस्कृतविद्यालयतः
श्रीजानकीनाथ काव्यतीर्थेन
प्रकाशिता ।

१३३२ वङ्गाब्दे पुनःसंस्करणम् ।

मूल्यमेकोनपादरूप्यकम् ।॥) ।

# निवेदनम् ।

इह खलु साहित्यसंसारे छन्दोविज्ञानं विशेषेण कवयितॄणामुपकारं साधयति, छन्दोविज्ञातारश्च अनायासेनैव शक्ता भवन्ति काव्यनिर्म्माणविषये इति किमधिकमत्र वक्तव्यम् । प्राचीनकाले सैतव-काश्यप-कात्यायनमाण्डव्यपिङ्गलप्रभृतिभिर्मुनिभिः बहुविधश्छन्दोग्रन्थो विनिर्म्मितः । तस्य छन्दोग्रन्थस्य पिङ्गलादिभेदेन बाहुल्येऽपि छन्दोमञ्जरीमेव विद्यार्थिनां परमोपयोगित्वेन अङ्गीकुर्व्वन्ति विपश्चितः । तथाचास्मिन् यत्र यादृशं छन्दः समुपक्रान्तं, तस्य लक्षणं तत्र तादृशेनैव छन्दसा निबद्धं, येन शिक्षार्थिनामननुशीलनाशुद्धबुद्धीनामपि मानसमुकुरे छन्दोग्रन्थमात्रशरणानां जनगणानामपर्य्यालोचनयापि प्रतिफलति छन्दःस्वरूपप्रकाशः । तेनैव छन्दोमञ्जरीमिमां कवयो नितरां प्रशस्तां मन्यन्ते । इयञ्च राजकीयकाव्योपाधिपरीक्षायामेव विशेषतः पाठ्यरूपेण निर्वाचिता विविधविद्यागौरवपरीक्षकैः कर्त्तृपक्षीयैः तत्र च परीक्षार्थिनामतिसरलतयापि प्रसिद्धो विषयः परीक्षणीयतया समुपस्थापितो दुर्गमतामवलम्बत इति विज्ञातवन्तो वयमस्या ललिततमायाः सहजगम्याया अपि नितरां सुगमतामुद्भावयितुं स्वीकृतवन्तो यत्नविशेषम् । ग्रन्थस्यास्य निर्म्माता खलु वैद्यवंशजो गोपालदासात्मजः पण्डिताग्रगण्यो महामहोपाध्यायः श्रीमद्गङ्गादासः । स हि अच्युतचरितं नाम महाकाव्यं, गोपालशतकं, सूर्य्यशतकञ्च प्रणिनाय । अस्य इतोऽधिकः परि-

चयः सुदुर्लभः। अस्मिन् ग्रन्थे अनर्घराघवीयश्लोकदर्शनात् तत्प्रणेतुर्मुरारिमिश्रस्यार्वाचीनोऽयं गंगादास इति निर्द्धारणं न दोषाय प्रभवति। छन्दसः प्राचीनत्वं तत्प्रशस्तिश्च भूयसीं समुपपादितवन्तो वयं अस्मत्प्रकाशिते पिङ्गलच्छन्दःसूत्र एव वहुधेति नात्र वाहुल्येन तद्विषयकालोचना समीचीनतया प्रतिभाति। तथापि संक्षेपतः किञ्चित् समालोच्यते। 'छन्दः पद्ये च वेदे च' इत्यमरवचनात् छन्दस एव नामान्तरं पद्यमिति प्रतीयते। किन्तु अनयोर्भेदोऽपि समुपलक्ष्यते, यथा—'छन्दोवद्धपदं पद्यमिति। अतः वहुभिश्छन्दःशास्त्रपारंगतैः पण्डितैर्यदुच्यते—'लघुगुरुस्वरव्यवस्थाविशेषश्छन्दः' इति तन्न असमीचीनम्, 'स्वराः अक्षरसंज्ञा स्युर्हलस्तदनुयायिनः' इति रुद्रयामलीयप्रमाणात् ; छन्दसो नियामकाः स्वरवर्णाः व्यञ्जनानि तु तदनुयायीनीति तेषां हृदयम्। चतुर्द्दशसु विद्यासु छन्दःशास्त्रमेका विशिष्टा विद्या। यथा विष्णुपुराण—'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। धर्म्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्द्दश॥'' वेदस्य षड्ङ्गानि यथा—"शिक्षा कल्पो व्याकरणं निरुक्तं छन्द इत्यपि। ज्योतिषामयनञ्चैव षड्ङ्गो वेद इष्यते॥" दृश्यते पाणीनियशिक्षायां—'छन्दः पादौ तु वेदस्य' यथा पद्भ्यां विना मनुजस्य, तथा छन्दोऽन्तरेण वेदस्य अवस्था दुरवस्थैव भवति। छन्दोज्ञानं सविशेषं प्रयोजनीयम्। तथाच श्रुतिः—'यो ह वा अविदितार्षेयच्छन्दो दैवत ब्राह्मणेन मन्त्रेण याजयति वाध्यापयति, वा स्थाणूं चर्च्छति गर्त्तं वा पद्यति प्रमीयते, पापीयान् भवति॥ (आ, ब्रा-२१)

पाणिनीयशिक्षायामपि—'आर्षं छन्दश्च दैवत्यं विनियोगः पुनः पुनः। वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः॥ मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥" "छादयति एनसः पापात् कर्म्मणः।" इति श्रुतिः। 'छन्दांसि छादनात्' इति यास्केन लिखितम्। चन्दयति ह्लादयति इति छन्दः, 'चन्देरादेश्च छः' इति पाणिनिः। वेदे गद्यं पद्यं च उभयमेव दृश्यते। तत्र गायत्रादीनि सप्त च्छन्दांसि व्यवहृतानि। श्रीमता गङ्गादासेन छन्दोमञ्जर्य्यां केवलं लौकिकच्छन्दसां लक्षणानि प्रकटितानि, अत एवात्र वैदिकच्छन्दसामालोचनेनालम्। वैदिकछन्दोभ्यः लौकिकछन्दसामाविर्भाव इत्यत्र नास्ति सन्देहावसर। संस्कृतभाषायां छन्दसो यथा सङ्ख्याधिक्यं दृश्यते न तथापरभाषासु। सत्सु असंख्येषु छन्दःसु प्राचीनयुगे आदिकविना तत्रभवता वाल्मीकिना स्वप्रणीते आदिकाव्ये रामायणे त्रयोदश छन्दसां अवतारः कृतः। ततो मुनिवरेण्यः श्रीकृष्णद्वैपायनो वेदव्यासश्चाष्टादशभिः छन्दोभिः महाभारतं प्रणीनाय। अथ क्रमेण संस्कृतसाहित्येषु बहूनां छन्दसां व्यवहारोऽजायत।

आदिसंस्कृतकाव्यात् रामायणादारभ्य मात्रसमयपर्य्यन्तं क्रमशः केन प्रकारेण छन्दसां आविर्भावः समपद्यत संस्कृतसाहित्येषु तद्विज्ञानाय प्रख्यातयशसा महामहोपाध्यायेन पण्डितशिरोमणिना श्रीमता रामतारणशिरोमणिना विरचिता काचित् सूचिपत्री अत्र सन्निवेश्यते।

चयः सुदुर्लभः। अस्मिन् ग्रन्थे अनर्घराघवीयश्लोकदर्शनात् तत्प्रणेतुर्मुरारिमिश्रस्यार्वाचीनोऽयं गंगादास इति निर्द्धारणं न दोषाय प्रभवति। छन्दसः प्राचीनत्वं तत्प्रशस्तिश्च भूयसीं समुपपादितवन्तो वयं अस्मत्प्रकाशिते पिङ्गलच्छन्दःसूत्र एव बहुधेति नात्र बाहुल्येन तद्विषयकालोचना समीचीनतया प्रतिभाति। तथापि संक्षेपतः किञ्चित् समालोच्यते। 'छन्दः पद्ये च वेदे च' इत्यमरवचनात् छन्दस एव नामान्तरं पद्यमिति प्रतीयते। किन्तु अनयोर्भेदोऽपि समुपलक्ष्यते, यथा—'छन्दोबद्धपदं पद्यमिति। अतः बहुभिश्छन्दःशास्त्रपारंगतैः पण्डितैर्यदुच्यते—'लघुगुरुस्वरव्यवस्थाविशेषश्छन्दः' इति तन्न असमीचीनम्, 'स्वराः अक्षरसंज्ञा स्युर्हलस्तदनुयायिनः' इति रुद्रयामलीयप्रमाणात् ; छन्दसो नियामकाः स्वरवर्णाः व्यञ्जनानि तु तदनुयायीनीति तेषां हृदयम्। चतुर्दशसु विद्यासु छन्दःशास्त्रमेका विशिष्टा विद्या। यथा विष्णुपुराण—'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। धर्म्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश॥'' वेदस्य षड़ङ्गानि यथा—"शिक्षा कल्पो व्याकरणं निरुक्तं छन्द इत्यपि। ज्योतिषामयनञ्चैव षड़ङ्गो वेद इष्यते॥" दृश्यते पाणीनियशिक्षायां—'छन्दः पादौ तु वेदस्य' यथा पद्भ्यां विना मनुजस्य, तथा छन्दोऽन्तरेण वेदस्य अवस्था दुरवस्थैव भवति। छन्दोज्ञानं सविशेषं प्रयोजनीयम्। तथाच श्रुतिः—'यो ह वा अविदितार्षेयच्छन्दो दैवत ब्राह्मणेन मन्त्रेण याजयति वाध्यापयति, वा स्थाणूं वच्छति गर्त्तं वा पद्यति प्रमीयते, पापीयान् भवति॥ (आ, ब्रा-२१)

पाणिनीयशिक्षायामपि—'आर्षं छन्दश्च दैवत्यं विनियोगः पुनः पुनः। वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः॥ मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥" "छादयति एनसः पापात् कर्म्मणः।" इति श्रुतिः। 'छन्दांसि छादनात् इति यास्केन लिखितम्। चन्दयति ह्लादयति इति छन्दः, 'चन्दे-रादेश्च छः' इति पाणिनिः। वेदे गद्यं पद्यं च उभयमेव दृश्यते। तत्र गायत्रादीनि सप्त च्छन्दांसि व्यवहृतानि। श्रीमता गङ्गादासेन छन्दोमञ्जर्य्यां केवलं लौकिकच्छन्दसां लक्षणानि प्रकटितानि, अत एवात्र वैदिकच्छन्दसामालोचनेनालम्। वैदिक-छन्दोभ्यः लौकिकछन्दसामाविर्भाव इत्यत्र नास्ति सन्देहाव-सर। संस्कृतभाषायां छन्दसो यथा सख्याधिक्यं दृश्यते न तथापरभाषासु। सत्सु असंख्येषु छन्दःसु प्राचीनयुगे आदिकविना तत्रभवता वाल्मीकिना स्वप्रणीते आदिकाव्ये रामायणे त्रयोदश छन्दसां अवतारः कृतः। ततो मुनिवरेण्यः श्रीकृष्णद्वैपायनो वेदव्यासश्चाष्टादशभिः छन्दोभिः महाभारतं प्रणीनाय। अथ क्रमेण संस्कृतसाहित्येषु बहूनां छन्दसं व्यवहारोऽजायत।

आदिसंस्कृतकाव्यात् रामायणादारभ्य मात्रसमयपर्य्यन्तं क्रमशः केन प्रकारेण छन्दसां आविर्भावः समपद्यत संस्कृत-साहित्येषु तद्विज्ञानाय प्रख्यातयशसा महामहोपाध्यायेन पण्डित-शिरोमणिना श्रीमता रामतारणशिरोमणिना विरचिता काचित् सूचिपत्री अत्र सन्निवेश्यते।

i)

| | रामायणे | महाभारते | भागवते | शिशुपालवध |
|---|---|---|---|---|
| अनुष्टुप् | वाल २।१५ | द्रोण ८४०८ | १०।१।१ | [illegible] सर्ग |
| इन्द्रवज्रा | उत्तर ६४।१६ | आदि २११२ | १०।२।२१ | ३ सर्ग |
| उपेन्द्रवज्रा | „ ७६ | „ ७०१८ | १०। ।१५ | ४।२७ „ |
| वंशस्थविलं | वाल २।४२ | „ ३१४१ | १०।२।२६ | १ „ |
| इन्द्रवंशा | सुन्द ८ सर्ग | आदि ३२४१ | १०।२।२६ | १२ „ |
| वैश्वदेवी | „ ६५।२८ | ० | ० | ० |
| प्रहर्षिणी | अयो १०७।१७ | आदि ६६० | १०।८६।१० | ८ „ |
| रुचिरा | „ २१।६५ | „ ११७६ | १०।१८।१६ | १७ „ |
| वसन्ततिलकं | उत्तरा १०६।२३ | „ ६५६ | १०।१।१३ | ५ „ |
| पुष्पिताग्रा | वाल २।४३ | शान्ति ६६७६ | १०।७।२१ | ७ „ |
| अपरवक्त्रम् | अयो ८१।१३ | „ ७१२५ | ० | ० |
| औपच्छन्दसिकम् | उत्तर ६७।२१ | ० | ० | २० „ |
| सुन्दरी | उत्तर ७३।२५ | ० | १०।६०।१४ | ० |
| रथोद्धता | ० | शान्ति ७१२६ | ० | १४ „ |
| प्रमाणिका | ० | „ १२०३६ | ७।८।४८ | ० |
| शालिनी | ० | आदि २१८६ | १०।३।२२ | १८ „ |
| भुजङ्गप्रयात | ० | शल्य २३५७ | ४।७।३२ | ० |
| द्रुतविलम्बित | ० | द्रोण ८४०६ | ३।१।३ | ६ „ |
| पञ्चचामर | ० | शान्ति १.०३६ | ० | ० |
| मालिनी | ० | कर्ण ३०५ | १०।४६।॰ | ११ „ |
| शार्दूलविक्रीडितं | ० | कर्ण ४६६६ | १।१।१ | १।७५ „ |

| | रामायणे | महाभारते | भागवते | शिशुपालवधे |
|---|---|---|---|---|
| इन्द्रिया | ० | ० | १०।३१।१ | ० सर्ग |
| मन्दाक्रान्ता | ० | ० | १०।८।२१ | ७।७४ „ |
| शिखरिणी | ० | ० | ४।७।४० | ५।६९ „ |
| नर्द्दटक | ० | ० | १०।८७।११ | ० |
| स्वागता | ० | ० | १०।३५।१ | १० „ |
| मञ्जुभाषिणी | ० | ० | ७।८।४५ | १३ „ |
| मृगेन्द्रमुख | ० | ० | १२।१२।५० | ० |
| स्रग्विणी | ० | ० | ७।३४।४३ | ४।४२ „ |
| स्रग्धरा | ० | ० | १०।९०।२४ | १४।९६ „ |

शिशुपालवधे निम्नलिखितानामपि २० छन्दसामुल्लेखो दृश्यते, तद्यथा प्रमिताक्षरा—९ सर्गे, दोधक ४।४५, जलोद्धतिगतिः ४।५४, प्रभा—६।६८, कुटजा—६।७३, अतिशायिनी ८।७१. भ्रमरविलसित ४।६२, मत्तमयूर ४।४४, कुररीरुता ४।४१. पृथ्वी ४।६६,'वंशपत्रपतित ४।६७, जलधरमाला ४।३०, मेघविस्फूर्जिता २०।७९, पञ्चकावरी ३।८२, हारिणी १२।७७, महामालिनी ११।६७, वैतालीय १६ सर्ग, उद्गता १५ सर्ग, पथ्या ४।२९, आर्य्यागीति ४।४८।

भवतु तावत् अत्रैव वाचां परिशेषः। निःशेषत्वं गते पूर्व्व-मुद्रिते पुस्तके वत्सरात् पूर्व्वमेव पुनः संस्करणस्य प्रयोजनीयता अन्वभूयत, किन्तु नानाविधासहनीयविपत्पातवशात् तिरोहितो-ऽभूत् सर्व्व एवास्माकमुद्यमः। परं प्राप्ता सम्प्रति घोषवैद्यूतिक-

मुद्रालयाधिपस्य परमकल्याणीयस्य श्रीमतो मन्मथनाथघोषस्य सकाशात् मुद्रणविषये महती सहायता, तेनैव प्रकाशितमिदं पुस्तकम्। दीर्घजीवी भूयादनुजकल्पः सपरिवारः स श्रीमान्। वारेऽस्मिन् हिन्दुस्थानस्थितानां विद्यार्थिनां सन्तोषाय हिन्दी-भाषानुवादोऽपि सन्निवेशितः।

संशोधनविषये कृतेऽपि महति प्रयत्ने 'गच्छतः स्खलन'मिति न्यायेन अल्पधी-मानव-स्वभावसुलभं स्खलितं क्षन्तव्यमिति कृपा-परतन्त्राणां ग्रन्थशोधनायासविदां विदुषां सविधे प्रार्थनेति दिक्।

१८४७ शकाब्दीयो वैशाखी पूर्णिमा। } आश्रव—प्रकाशकस्य।

---

# विषयसूची।

| विषयाः | पृष्ठे |
|---|---|

# सूचीपत्रम्

---

# छन्दोमञ्जरी ।

## प्रथमः स्तवकः ।

देवं प्रणम्य गोपालं वैद्यगोपालदासजः ।
सन्तोषातनयश्छन्दो गङ्गादासस्तनोत्यदः ॥१॥
सन्ति यद्यपि भूयांसश्छन्दोग्रन्था मनीषिणाम् ।
तथापि सारमाकृष्य नवकार्थो ममोद्यमः ॥२॥

---

नमो विघ्ननाशाय। ग्रन्थकर्त्ता ग्रन्थारम्भे निखिलविघ्नविघाताय अभीष्टदेवता-प्रणामरूपमङ्गलाचरणपुरःसरं ग्रन्थप्रतिपाद्यं प्रतिपादयति—देवमिति। वैद्यः वैद्य-वंशोत्पन्नः यो गोपालदासः तस्मात् जात इति वैद्यगोपालदासजः, वैद्यवृत्तेर्गोपालदासस्य पुत्र इति केचित्; सन्तोषाख्या रमणी तस्यास्तनयस्तद्गर्भसमुद्भूतः गङ्गादासः गङ्गादास-नामा कविः, देवं अभीष्टदेवं गां पालयतीति गोपालस्तं श्रीकृष्णं प्रणम्य, अदः एतत् छन्दः छन्दसां परिचायकं शास्त्रं तनोति प्रणयति ॥ १ ॥

ननु पिङ्गलप्रभृतीनां पूर्व्वाचार्य्याणां बहव एव छन्दोग्रन्था वर्त्तन्ते, तत् किमिति तवायमारम्भः इत्याशङ्कामपनेतुमाह—सन्तीति। यद्यपि मनीषिणां पूर्व्वपण्डितानां पिङ्गलादीनां भूयांसः बहुतराश्छन्दोग्रन्थाः छन्दःशास्त्राणि सन्ति वर्त्तन्ते, तथापि तेषु

---

১। বৈদ্যবংশজ, গোপালদাসাত্মজ, সন্তোষাগর্ভজাত, গঙ্গাদাসনামক কবি স্বীয় অভীষ্টদেবতা শ্রীকৃষ্ণকে প্রণাম করিয়া ছন্দঃশাস্ত্র প্রণয়ন করিতেছেন।

২। মনীষিগণের বিরচিত বহু ছন্দোগ্রন্থ বর্ত্তমান থাকিলেও, বালক-

इयमच्युतलीलाढ्या सद्वृत्ता जातिशालिनी ।
छन्दसां मञ्जरी कान्ता सभ्यकण्ठे लगिष्यति ॥३॥
पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।
वृत्तमक्षरसङ्ख्यातं जातिर्मात्राकृता भवेत् ॥४॥

---

सत्स्वपि सारं सारांशं पिङ्गलादीनां ग्रन्थेभ्य इत्यर्थः, आकृष्य संगृह्य, नवकाः अनुकम्पार्हा ये बालकाः, अनुकम्पार्थे नवशब्दात् कप्रत्ययः। तदर्थः तेषां व्युत्पत्तये इत्यर्थः। अथवा नवानां बालकानां कार्थः सुखार्थः। 'सुखशीर्षजलेषु कम्' इति मेदिनी। मम उद्यमः छन्दोग्रन्थप्रणयने प्रवृत्तिरित्यर्थः ॥ २ ॥

ननु बालकार्थं प्रणीते ग्रन्थे सभ्यवृन्दानां का श्रद्धा भवेदित्यत आह—इयमच्युतलीलेति। इयं वक्ष्यमाणा अच्युतस्य श्रीकृष्णस्य लीलया क्रीड़या आढ्या युक्ता, सद्वृत्ता मनोरमपद्यान्विता। 'वृत्तं पद्ये चरित्रे च' इत्यमरः। जातिशालिनी जातिः मात्रानियता आर्य्याप्रभृतिः, तया शालते शोभते या सा। कान्ता मनोज्ञा छन्दसां मञ्जरी सभ्यकण्ठे सभ्यानां सामाजिकानां कण्ठे गले लगिष्यति सङ्गता भविष्यति। श्रीकृष्णलीलावर्णनात् सहृदयाः छन्दोमञ्जरीमिमां कण्ठस्थां करिष्यन्तीति भावः। पक्षे कान्ता रमणी चेति ध्वन्यते। रमणीपक्षे—अच्युता सम्पूर्णा या लीला विलासस्तया आढ्या युक्ता। सद्वृत्ता सच्चरिता। जातिशालिनी कुलीना। मञ्जर्य्याः कर्णभूषणत्वेन प्रसिद्धावपि वाङ्मयत्वात् रमणीसादृश्याच्च कण्ठलग्नत्वमुक्तम्। वस्तुतस्तु श्रीकृष्णलीलारसरसिकानां श्रोतृवर्गाणां श्रुतिभूषणे सामर्थ्यात् मञ्जरीत्वेन निर्देशः ॥ ३ ॥

इदानीं प्रकृतमारभते—पद्यमिति। चतुर्णां पादानां श्लोकस्य तुरीयभागाणां समाहारश्चतुष्पदी, समाहारद्विगुः। पद्यं नाम कथ्यते इति शेषः। चतुश्चरणा-

---

দিগের শীঘ্র ব্যুৎপত্তিলাভার্থ প্রাচীন গ্রন্থ হইতে সার সঙ্কলন করিয়া এই গ্রন্থ প্রণয়নে আমি প্রবৃত্ত হইতেছি।

৩। শ্রীকৃষ্ণলীলাপরিপূর্ণা, বৃত্তিশালিনী, জাতিশোভিতা, মনোজ্ঞা এই ছন্দোমঞ্জরী সামাজিকবর্গের কণ্ঠদেশে বিরাজ করিবে।

समम‌र्द्धसमं वृत्तं विषमञ्चेति तत् त्रिधा।
समं समचतुष्पादं भवत्यर्द्धसमं पुनः ॥५॥
आदिस्तृतीयवद्व यस्य पादस्तुर्य्यो द्वितीयवत्।
भिन्नचिह्नचतुष्पादं विषमं परिकीर्त्तितम् ॥६॥

---

त्मकस्य पद्यमिति संज्ञा ज्ञातव्या इत्यर्थः। तच्च पद्यं वृत्तं वृत्ताख्यं, जातिः जाति-संज्ञकमिति एवम्प्रकारेण द्विधा द्विप्रकारं प्रसिद्धमिति शेषः। तत्र अक्षरसंख्यातं अक्षरैः एकद्व्यादिवर्णैः संख्यातं परिगणितं यत् तत् वृत्तं नाम भवेत्। या, मात्राः अक्षरावयवरूपाः ताभिः कृता निबद्धा सा जातिर्नाम भवेत्। गणना तु लघुवर्ण एक-मात्रः, गुरुस्तु द्विमात्र इति एवम्प्रकारेण ज्ञातव्या। तथाच—'एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते। त्रिमात्रस्तु भवेत् प्लुतो व्यञ्जनञ्चार्द्धमात्रकम्' इति ॥ ४ ॥

सममिति। तत् पूर्व्वं परिभाषितं वृत्तं समम्, अर्द्धसमं. विषमञ्च इति त्रिधा त्रिविधं भवति। तत्र समचतुष्पादं समाः तुल्यसंख्यवर्णाश्चत्वारः पादा यस्य तत् समम्। यस्य वृत्तस्य आदिः प्रथमः पादः अंशः तृतीयवत् तृतीयपादतुल्यः, एवं तुर्य्यः चतुर्थः पादः द्वितीयवत् द्वितीयपादतुल्य, तत् पुनः, 'पुनरिति वाक्यभेदे', अर्द्धसमं नाम पद्यं परिकीर्त्तितम्। भिन्नचिह्नचतुष्पादं भिन्नं चिह्नं लक्षणं येषां ते भिन्नचिह्नाः, तादृशाः चत्वारः पादा यस्य तत्, विषमवृत्तं परिकीर्त्तितं कथितमित्यर्थः ॥ ५। ६ ॥

---

৪। সংস্কৃত (ভাষা) গদ্য ও পদ্য ভেদে দ্বিবিধ। তন্মধ্যে যাহাতে চারিটী পাদ (চরণ) থাকে, তাহার নাম পদ্য। 'মাতৃকস্য চতুর্ভাগ পাদ ইত্যভিধীয়তে' মাতৃকস্য শ্লোকস্য ইত্যর্থঃ। শ্লোকের চারিভাগের একভাগের নাম পাদ। ঐ পদ্য বৃত্ত ও জাতিভেদে দ্বিবিধ,—অক্ষর গণনানিয়মে নিবদ্ধ পদ্যের নাম বৃত্ত। মাত্রার সংখ্যানুসারে রচিত পদ্যের নাম জাতি।

৫—৬। ঐ বৃত্ত আবার ত্রিবিধ, যথা—সম, অর্দ্ধসম ও বিষম। যাহার চারিটী চরণই সমান সমান অক্ষরে নিবদ্ধ, তাহাকে সমবৃত্ত কহে, যেমন—অনুষ্টুপ

म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥७॥
मस्त्रिगुरुस्त्रिलघुश्च नकारो
भादिगुरुः पुनरादिलघुर्यः।

---

छन्दोलक्षणोपयोगिनः साङ्केतिकान् दशगणान् निर्द्दिशति—म्यरस्तेति। एभिः अन्ते लः येषां ते लान्ताः तैः, मश्च यश्च रश्च सश्च तश्च जश्च भश्च नश्च गश्च तैः म्यरस्तजभ्नगैः, एतैः म य र स त ज भ न ग लकारैर्दशभिरक्षरैर्वर्णैः समस्तं वाङ्मयं वाग्रूपं छन्दःशास्त्रं विष्णुना त्रैलोक्यं त्रयाणां लोकानां समाहारः त्रिलोकी त्रिलोकी एव त्रैलोक्यं त्रिभुवनम् इव व्याप्तम्। वक्ष्यमाणसङ्केतेन मकारादिभिर्दशभिर्वर्णैरेव समस्तानां छन्दसां लक्षणानि लक्षयिष्यामि इत्यर्थः ॥ ७ ॥

सङ्केतं दर्शयति—मस्त्रीति। मः, त्रिगुरुः त्रयो वर्णा गुरवो यत्र सः कथितः। पूर्व्वोक्ता मकारादयो दशवर्णा एव दशगणा ग्रहीतव्याः, यथा—मगणः, यगणः, रगणः इत्यादि। त्रयो वर्णा गुरवः एवं प्रकारक एको गणः मकारेण ज्ञातव्यः। यथा—

---

প্রভৃতি। যাহার অর্দ্ধেক অপর অর্দ্ধেকের তুল্য, তাহাকে অর্দ্ধসম বলে; অর্থাৎ প্রথম পাদে যত অক্ষর তৃতীয় পাদেও তত অক্ষর, আবার দ্বিতীয় পাদে যত অক্ষর চতুর্থ পাদেও যদি তত অক্ষর থাকে, তাহার নাম অর্দ্ধসমবৃত্ত। যথা— বিয়োগিনী (সুন্দরী) প্রভৃতি। যাহার চারি চরণই চারি প্রকার, (অর্থাৎ প্রত্যেক চরণেই বিভিন্নসংখ্যক অক্ষর থাকে) তাহাকে বিষমবৃত্ত বলে।

৭। গ্রন্থকার নিম্নলিখিত সঙ্কেত দ্বারা ছন্দের লক্ষণ করিতেছেন।— ম, য, র, স, ত, জ, ভ, ন, গ এবং ল এই দশটি অক্ষরে সমস্ত বৃত্ত পরিব্যাপ্ত, অর্থাৎ এই দশটি অক্ষর দ্বারা যে সঙ্কেত করা হইবে, তদ্দ্বারাই সমস্ত বৃত্ত বুঝিতে পারা যাইবে। বিষ্ণু যেমন বিশ্বসংসার ব্যাপিয়া আছেন, এরূপ এই দশটি অক্ষর দ্বারা সমস্ত বৃত্ত পরিব্যাপ্ত।

जो गुरुमध्यगतो रलमध्यः
सोऽन्तगुरुः कथितोऽन्तलघुस्तः ॥ ८ ॥

---

श्रीदुर्गा । अत्र त्रयो वर्णा एव गुरवः । एवं श्रीकाली, वागीशः इत्यादि । नकारः नगणः त्रिलघुः त्रयो लघवो यत्र सः कथितः, यथा—विहर, विजय, पवन इत्यादि । भः भगणः, आदिगुरुः आदिः प्रथमो वर्णः गुरुर्यत्र सः कथितः । भश्चासौ आदिगुरुश्चेति कर्म्मधारयः अथवा भ इति लुप्तप्रथमैकवचनम् । वर्णत्रयेण हि एको गणः स्यात् तत्र आदिवर्णस्य गुरुत्वाभिधानेन परौ द्वौ वर्णौ लघू इति प्रतिपत्तव्यम् । यथा—शङ्कर, संहर इत्यादि । यः आदिलघुः, आदिः प्रथमो वर्णः लघुर्यत्र सः कथितः । आदिवर्णस्य लघुत्वाभिधानात् परौ द्वौ वर्णौ गुरू इति ज्ञेयम् । सर्व्वत्रैव एवं नियमोऽनुसर्त्तव्यः । यगणो यथा—गुरुभ्यः महेशः इत्यादि । जः गुरुमध्यगतः, गुरुवर्णौ मध्यगतौ मध्यस्थितौ यस्य सः कथितः, आद्यन्तौ लघू मध्यो गुरुः एवं प्रकारो गणः जकारः । यथा—शिवाय, नतोऽस्मि इत्यादि । र इति लुप्तप्रथमैकवचनम् । र, लः लघुः मध्यः मध्यस्थितो यस्य सः कथितः । आद्यन्तौ वर्णौ गुरू, मध्यवर्णौ लघु एवं गणः रवर्णेन ज्ञातव्यः । यथा—चन्द्रमाः ईश्वरः इत्यादि । सः सकारः, अन्तगुरुः अन्तः अन्तिमो वर्णः गुरुर्यत्र सः कथितः । आद्यौ द्वौ वर्णौ लघू अन्तिमो वर्णौ गुरुः एवं गणः सकारेण ज्ञातव्यः । यथा—रमणी, शरणम् इत्यादि । तः अन्तलघुः अन्तो लघुर्यस्य सः कथितः आदिमध्यौ वर्णौ गुरू अन्तिमो वर्णो लघुः एवं गणः तकारेण ज्ञातव्यः । यथा—भास्वन्ति, रत्नानि इत्यादि ॥ ८ ॥

---

৮। তিনটি তিনটি অক্ষরে এক একটী গণ হয়। পূর্ব্বোক্ত ম হইতে ন পর্য্যন্ত আট অক্ষরের নামে তিন অক্ষর-ঘটিত আটটি গণ বুঝিতে হইবে। ক্রমে তিনটী অক্ষর গুরুর নাম মগন অর্থাৎ ম বলিলেই ক্রমে তিনটী অক্ষর গুরু ইহা বুঝিতে হইবে। ক্রমে তিনটী অক্ষর লঘুর নাম নগণ, অর্থাৎ ন বলিলেই ক্রমে তিনটী অক্ষর লঘু ইহা বুঝিতে হইবে। এইরূপ সর্ব্বত্র। ভ বলিলে আদি অক্ষরটী গুরু ( পরের দুইটী হ্রস্ব ) ; য বলিলে আদি অক্ষরটি লঘু ( পরের দুইটী

गुरुरेको गकारस्तु लकारो लघुरेकक:।
क्रमेण चैषां रेखाभिः संस्थानं दर्श्यते यथा ॥ ९ ॥
ज्ञेयाः सर्व्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः।
गणाश्चतुर्लघूपेताः पञ्चार्य्यादिषु संस्थिताः ॥ १० ॥

---

गुरुरित्यादि।—एको वर्णो गुरुः गकारः, गकारेण एको वर्णो गुरुः स्यात् इति बोद्धव्यम्। यथा—श्रीः, या, सा, इत्यादि। एककी एको वर्णः लघुर्लकारः, लकारेण एको वर्णो लघुः स्यात् इति ज्ञातव्यम्। यथा—च, हि, तु, इत्यादि। क्रमेण मकारादिक्रमेण इत्यर्थः। एषां मकारादीनां गणानां रेखाभिः आकृतिविशेषैः चिह्नविशेषैः संस्थानं आकृतिः दर्श्यते। वक्ररूपो जकारैकदेशो गुरोराकारः (ऽ) एवम्। लघोस्तु सरलरेखाकारः (।) एवम्। पाश्चात्यमते गुरोराकारः (—) एवम्। लघोराकारः (⌣) एवम् ॥ ९ ॥

सम्प्रति जातेर्गणान् निर्दिशति—ज्ञेया इति। अत्र चतुर्लघूपेताः चतुर्लघुसहिताः सर्व्वान्तमध्यादिगुरवः द्वन्द्वात् परं श्रूयमाणः शब्दः प्रत्येकमभिसम्बध्यते इति न्यायात् सर्व्वत्र गुरुशब्दस्य सम्बन्धः, अतः सर्व्वगुरुः (ऽऽ) अन्तगुरुः (।।ऽ) मध्यगुरुः (।ऽ।) आदिगुरुः (ऽ।।) चतुर्लघुः (।।।।) एवम्प्रकाराः पञ्च चतु-

---

গুরু), জ বলিলে মধ্য অক্ষরটি গুরু; মধ্য অক্ষরটী লঘু হইলে তাহার নাম রগণ; স গণ দ্বারা অন্ত অক্ষরটি গুরু, এবং ত গণ দ্বারা অন্ত অক্ষরটী লঘু এরূপ বুঝিতে হইবে। টীকা দ্রষ্টব্য।

৯। গ এবং ল দ্বারা একটী একটী অক্ষরের পরিচয় হয়। গ বলিলে একটী অক্ষর গুরু। ল বলিলে একটী অক্ষর লঘু এরূপ বুঝিতে হইবে। ক্রমে রেখা দ্বারা গুরু লঘু প্রদর্শিত হইবে। (ऽ) এইটী গুরু অক্ষরের চিহ্ন। (।) এইটী লঘু অক্ষরের চিহ্ন।

১০। মাত্রা-গণনা অনুসারে নিবদ্ধ শ্লোকের নাম জাতি, ইহা পূর্ব্বেই উক্ত হইয়াছে। এক্ষণে ঐ মাত্রার নিয়ম লিখিত হইতেছে। আর্য্যাদি জাতিতে

सानुस्वारश्च दीर्घश्च विसर्गी च गुरुर्भवेत् ।
वर्णः संयोगपूर्व्वश्च तथा पादान्तगोऽपि वा ॥ ११ ॥

---

ध्वाला चतुर्मात्रात्मका गणाः अत्र आर्य्यादिषु जातिच्छन्दःसु संस्थिताः ज्ञेयाः । सर्व्वगुरुर्यथा—काली, दुर्गा इत्यादि । अन्तगुरुर्यथा—तरुणः अभया इत्यादि । मध्यगुरुर्यथा—शिवाय, नमामि इत्यादि । आदिगुरुर्यथा—पूजितः मानव इत्यादि । चतुर्लघुर्यथा—बुधवर, जलधर इत्यादि ॥ १० ॥

इदानीं गुरुलक्षणं निर्द्दिशति—सानुस्वार इति । सानुस्वारः अनुस्वारयुक्तः स्वरः ( अ, इ, उ, ऋ, ऌ, ) गुरुः । अत्र अनुस्वार इत्युपलक्षणम्, तेन अवसाने व्यञ्जनसत्त्वेऽपि लघुर्गुरुर्भवेत् । एवं दीर्घः ( आ, ई, ऊ, ॠ, ॡ, ए, ऐ, ओ, औ ), विसर्गी च विसर्गयुक्तश्च संयोगपूर्व्वश्च संयोगः संयुक्तवर्णः तस्मात् पूर्व्वः वर्णश्च गुरुर्भवेत् । पादान्तगः चरणस्यान्तिमो लघुस्वरः वा विकल्पेन गुरुर्भवेत् । अपिशब्देन पादान्तस्थितो गुरुरपि वर्णो विकल्पेन गुरुः स्यात् । अत्र वाशब्दस्य व्यवस्थावाचित्वात् वृत्तेषु लघुवर्णो विकल्पेन गुरुर्भवेत्, जातिषु तु लघुर्गुरुश्च वर्णो विकल्पेन गुरुर्भवेदिति बोद्धव्यम् । अत्रापि पादान्तस्थितस्य लघुवर्णस्य गुरुत्वे यदि बन्धस्य दृढ़ता भवेत् तदा न दोषः अन्यथा तु दोषः एव, तथा च साहित्यदर्पणे—"हन्त यत्र पतन्ति मूढ़मनसामस्त्राणि वस्त्राणि च ।" अत्र वस्त्राण्यपीति पाठे लघोरपि गुरुत्वं स्यात् । तथा च बन्धस्य दृढ़तैव पादान्तिमलघोर्गुरुत्वे हेतुः । पादान्तस्थितस्य लघुवर्णस्य यत् गुरुत्वमुक्तं तत् सर्व्वत्र द्वितीयचतुर्थपादविषयम् । प्रथमतृतीयपादविषयन्तु वसन्ततिलकादाविति ॥ ११ ॥

---

চারিটি মাত্রা লইয়া পাঁচটী গণ আছে, যথা—সর্ব্বগুরু, অন্তগুরু, মধ্যগুরু, আদিগুরু ও চতুর্লঘু ; অর্থাৎ এই পাঁচটী চতুষ্কলাত্মক অর্থাৎ চারিমাত্রাময় গণদ্বারা আর্য্যাদি ছন্দের লক্ষণ নির্দ্দিষ্ট হইবে। বাম উরুর উপর বাম কর মণ্ডলাকারে ঘুরাইয়া আনিতে যতটুকু সময় লাগে, তাহার নাম মাত্রা। যে অক্ষর উচ্চারিত হইতে ঐরূপ এক মাত্রার প্রয়োজন হয়, তাহাকে হ্রস্ব কহে। এরূপ দুই

অত্র পাদান্তগো লঘুর্গুর্ব্বর্ভবেদ্বা। যথা—

তরুণং সর্ষপশাকং, নবৌদনং পিচ্ছিলানি চ দধীনি।
অল্পব্যয়েন সুন্দরি, গ্রাম্যজনো মিষ্টমশ্নাতি ॥ ১২ ॥

সুন্দরীতি গ্রাম্যশব্দে পরে বিকল্পেন লঘুত্বম্। তথা মৎপিতুঃ পারিজাতহরণনাটকে—

সিন্দূরপূরস্নতগৈরিকরাগশোভে শশ্বন্মদস্রবণনির্ঝরবারিপূরে।
সংগ্রামভূমিগতমত্তসুরেভকুম্ভকূটে মদীয়নখরাশনয়ো বিশন্তু ॥১৩॥

---

পাদান্তস্থিতস্য লঘোর্বিকল্পেন গুরুত্বমুদাহরতি—তরুণমিত্যাদি। হে সুন্দরি! গ্রাম্যজনঃ অল্পব্যয়েন তরুণং নবং সর্ষপশাকং নবৌদনং নূতনতণ্ডুলান্নং পিচ্ছিলানি স্নিগ্ধানি দধীনি চ মিষ্টং যথা স্যাৎ তথা অশ্নাতি ভুঙ্ক্তে। অত্র আর্য্যানাম বৃত্তম্। অস্য লক্ষণন্তু প্রথমপাদে দ্বাদশমাত্রাঃ দ্বিতীয়পাদে অষ্টাদশমাত্রাঃ তৃতীয়পাদে পুনর্দ্বাদশমাত্রাঃ চতুর্থপাদে পঞ্চদশমাত্রা ইতি। উল্লিখিতে শ্লোকে দ্বিতীয়পাদচতুর্থপাদয়োরন্তিমবর্ণয়োর্লঘোরপি গুরুত্বম্। এবং তৃতীয়পাদে সুন্দরি ইতি ইকারস্য গ্রাম্য ইতি সংযুক্তাগ্রবর্ণাৎ পূর্ব্ববর্ত্তিত্বেন গুরুত্বেঽপি পাদান্তত্বাৎ লঘুত্বম্। অতঃ পাদান্তগুরোর্লঘুত্বস্বীকারেণ একমাত্রাঙ্কাশ্রয়াৎ তৃতীয়পাদে দ্বাদশমাত্রা এব জ্ঞাতব্যাঃ; অতশ্ছন্দোভঙ্গো ন গৃহীতব্যঃ ॥ ১২ ॥

বৃত্তে পাদান্তলঘোর্গুরুত্বমুদাহরতি—সিন্দূরেতি। ইন্দ্রং প্রতি কুপিতস্য গরুত্মত উক্তিরিয়ম্—মদীয়া নখরাঃ এব অশনয়ঃ কুলিশানি সিন্দূরপূরেণ সিন্দুরৌঘেণ কৃতা

---

মাত্রাবিশিষ্টের নাম দীর্ঘ, তিন মাত্রা বিশিষ্টের নাম প্লুত এবং অর্দ্ধমাত্রাযুক্তের নাম ব্যঞ্জন। একটী লঘুবর্ণে একটী মাত্রা বুঝিতে হইবে। একটী দীর্ঘবর্ণে দুইটী মাত্রা হয়। যেমন 'কালী' এইটী সর্ব্বগুরু। এখানে মাত্রা চারিটী আছে। 'কমলা' এখানে অন্তগুরু ৪টী মাত্রা। 'গণেশ' এখানে মধ্যগুরু—মাত্রা চারিটী। 'শঙ্কর' এখানে সংযোগের পূর্ব্ব গুরু, অতএব আদিগুরু—৪টী মাত্রা। 'গণপতি' সর্ব্বলঘু, এখানে ৪টী মাত্রা পাওয়া গেল।

अत्र तृतीयचतुर्थपादान्तलघोर्गुरुत्वम् । तथा ममाच्युत-चरितेऽपि—

रक्तेन केशिदशनक्षतसम्भवेन, रेजे स मण्डिततरो हरिबाहुदण्डः ।
तद्दन्तसन्दलितभीमभुजप्रतापवह्नेरिव स्फुटकणप्रकरेण कीर्णः ॥१४॥

---

गैरिकवर्णस्य शोभा यस्य तस्मिन् । अस्रवत् निरन्तरं यत् मदस्रवणं दानक्षरणं तदेव निर्झरवारिपूरः प्रस्रवणजलौघः यत्र तस्मिन् । संग्रामभूमिगतः रणक्षेत्रगतः यः मत्तः सुरेभः सुरहस्ती ऐरावतः तस्य कुम्भ एव कूटं तस्मिन् । 'कूटोऽस्त्री शिखरं शृङ्ग' मित्यमरः । विशन्तु प्रविशन्तु । एकदेशविवर्तिरूपकमलङ्कारः । तदुक्तम्—'यत्र कस्य चिदार्थत्वमेकदेशविवर्त्तित'दिति । वसन्ततिलकं वृत्तम् । अत्र 'श्व' 'न्तु' वर्णयो-स्तृतीयचतुर्थपादान्तस्थयोर्लघोरपि गुरुत्वम् । १३ ॥

रक्तेनेत्यादि । सः हरिबाहुदण्डः हरेर्बाहुरेव दण्डः रूपककर्म्मधारयः । केशि-दशनक्षतसम्भवेन रक्तेन केशी नाम कश्चिद्दानवः तस्य दशनैर्दन्तैः यत् क्षतं व्रणः तत्-सम्भवेन तज्जातेन रक्तेन रुधिरेण मण्डिततरः अतिशयेन भूषितः सन्, तस्य केशिनो दानवस्य दन्तैः सन्दलितः यः भीमः भयङ्करः भुजः बाहुस्तस्य प्रताप एव वह्निः तस्य स्फुटः उद्दीप्तः यः कणप्रकरः कणानां समूहः तेन समुज्ज्वलस्फुलिङ्गनिचयेन इत्यर्थः, कीर्णः व्याप्तः इव रेजे शोभितवान् । 'त्रिषु स्फुलिङ्गोऽग्निकण' इत्यमरः । वह्ने-रिति रूपकम् । स्फुटकणप्रकरेण कीर्ण इवेति उत्प्रेक्षा । ततः उभयोः सङ्कर इति । वसन्ततिलकं नाम वृत्तम् । अत्र प्रथमपादान्तिमस्य नकारस्य तृतीयपादान्तिमस्य पकारस्य च गुरुत्वं बोध्यम् । १४ ॥

---

১১—১৬। অনুস্বারযুক্ত দীর্ঘ, বিসর্গসংযুক্ত বর্ণ, এবং সংযুক্ত বর্ণের পূর্ব্ববর্ণ গুরু হয়। পাদের অন্তস্থিত লঘুবর্ণ বিকল্পে গুরু, এবং গুরু বর্ণ বিকল্পে লঘু হইয়া থাকে। পাদের অন্তস্থিত বর্ণের লঘু গুরু ব্যবস্থা প্রয়োজনা-

अत्र प्रथमतृतीयपादान्तस्यापि लघोर्गुरुत्वम्।

"प्रह्वे वा" इति पुनः पिङ्गलमुनेर्विकल्पविधायकं सूत्रम्।

उदाहरणं यथा कुमारे—

सा मङ्गलस्नानविशुद्धगात्री गृहीतप्रत्युद्गमनीयवस्त्रा।
निर्वृत्तपर्ज्जन्यजलाभिषेका प्रफुल्लकाशा वसुधेव रेजे॥ १५॥

अत्र प्रशब्दे परे गुरोर्लघुत्वम्।

प्राप्य नाभिह्रदमज्जनमाशु प्रस्थितं निवसनग्रहणाय।
औपनिविकमरुन्ध किल स्त्री वल्लभस्य करमात्मकराभ्याम्॥१६॥

---

प्रह्वे वेति। प्रे अथवा ह्रे परवर्त्तिनि पूर्व्वस्थितो लघुर्विभाषया गुरुः स्यादित्यर्थः, पिङ्गलमुनिः "प्रह्वे वा" इति विशेषसूत्रं प्रणिनाय इति गङ्गादासेन समुल्लिखितम्, किन्त्वस्माभिः प्रचलिते पिङ्गलच्छन्दःसूत्रे नैतत् सूत्रं दृश्यते।

सा मङ्गलेति।—मङ्गलस्नानेन मङ्गलार्थनिमज्जनेन विशुद्धं गात्रं यस्याः सा पूतदेहा इत्यर्थः। गृहीतं धृतं प्रत्युद्गमनीयवस्त्रं विशुद्धशुष्कवसनं यया तादृशी, पार्व्वती पर्व्वतस्यापत्यं स्त्री हैमवती, निर्वृत्तपर्ज्जन्यजलाभिषेका निर्वृत्तः निष्पन्नः पर्ज्जन्यस्य मेघस्य जलेन अभिषेकः स्नानं यस्याः सा मेघाम्बुसिक्ता इत्यर्थः। प्रफुल्लकाशा विकसितकाशकुसुमा वसुधा पृथिवी इव रेजे शोभितवती। वृत्तमुपजातिः। अत्र प्रेति संयुक्तात् पूर्व्ववर्त्तिनः गृहीत इति तृतीयस्वरस्य प्रह्वे वेति विशेषविधानात् लघुत्वम् ततश्च छन्दोभङ्गदोषो न संजात इति॥ १५॥

प्राप्येत्यादि। स्त्री काचिदिति शेषः। आत्मकराभ्यां स्वकीयाभ्यामेव पाणिभ्यां नाभिरेव ह्रदः तत्र मज्जनं प्राप्य आशु तत्क्षणात् निवसनग्रहणाय वस्त्रसमाकर्षणाय प्रस्थितं प्रवृत्तं औपनिविकं नीविसमीपे चलितमित्यर्थः, वल्लभस्य प्रियस्य करं

---

नुसारे हइबे। प्र एवं ह्र शब्देर पूर्व्ववर्त्ती वर्ण विकल्पे ह्रस्व हय—ईश।

अत्र ह्रुशब्दे परे गुरोर्लघुत्वम् । तीव्रप्रयत्नोच्चारणेनात्र लघुत्वमिति कण्ठाभरणः; यदुक्तम्,—

यदा तीव्रप्रयत्नेन संयोगादेरगौरवम् ।
न छन्दोभङ्ग इत्याहुस्तदा दोषाय सूरयः ॥ १७ ॥

---

अतन्व किल रोधमभिनीतवतीत्यर्थः । अत्र नाभि इति इकारस्य ह्रेति संयुक्तात् पूर्व्वस्य सत्यपि गुरुत्वनियमे "प्रह्रे वेति" विशेषसूत्रेण वैकल्पिकविधानात् ह्रस्वत्वं, ततश्च न छन्दोभङ्गदोषः संजात इति ॥ १६ ॥

तीव्रेति—तीव्रप्रयत्नोच्चारणेन तीव्रः उत्कटः प्रयत्नः यस्मिन् तादृशं यत् उच्चारणं तेन गुरोरपि लघुत्वं स्यात् इति कण्ठाभरणो वदति । वर्णः संयोगपूर्व्वश्चेति संयुक्त-वर्णात् पूर्व्ववर्त्तिनो वर्णस्य गुरुत्वनियमो न सार्व्वत्रिक इति पूर्व्वाचार्य्याणां मतमाह—यदेति । यदा तीव्रप्रयत्नेन द्रुततरपठनप्रयत्नेन संयोगादेः संयुक्तपूर्व्ववर्णस्य अगौरवं लाघवं भवतीति शेषः । तदा छन्दोभङ्गः न दोषाय न दोषकरः इति सूरयः पूर्व्व-पण्डिताः आहुः कथयन्ति । उच्चारणप्रयत्नवशेन यदि सुश्रवता स्यात् तदा छन्दो-भङ्गोऽपि न दोषकर इति । यथा—'नाहं वाली सुवाहुर्नखरविशिरसौ दूषणस्तारकाह' मिति । अत्र उच्चारणप्रयत्नेन खरविशिरसौ इति संयुक्तात् 'वि' इति पदात् पूर्व्व-वर्त्ती खर इति अकारः लघुरिव प्रतिभातीति प्राचीनानां मतमिदं अर्व्वाचीनैर्न स्वीक्रियते ॥ १७ ॥

---

পিঙ্গলমুনির মত বলিয়া গ্রন্থকার লিখিয়াছেন। ( কিন্তু প্রচলিত পিঙ্গলসূত্রে এই সূত্র দেখিতে পাওয়া যায় না। ) উদাহরণ মূলে দ্রষ্টব্য।

১৭। মূলোক্ত 'প্রাপ্য নাভিহ্রদ' ইত্যাদি শ্লোকে 'হ্র' এই অক্ষরের পূর্ব্ববর্ত্তী অক্ষরটি যে লঘু হইয়াছে, ( নচেৎ ছন্দোভঙ্গ হয় ) তাহার কারণ তীব্র প্রযত্নে উচ্চারণ—ইহা কণ্ঠাভরণ বলেন। যখন দ্রুতভাবে পড়িবার প্রয়োজন হয়,

यतिर्जिह्वेष्टविश्रामस्थानं कविभिरुच्यते।
सा विच्छेदविरामाद्यैः पदैर्वाच्या निजेच्छया ॥१८॥
क्वचिच्छन्दस्यास्ते यतिरभिहिता पूर्वकृतिभिः
पदान्ते सा शोभां व्रजति पदमध्ये त्यजति च।
पुनस्तत्रैवासौ स्वरविहितसन्धिः श्रयति तां
यथा कृष्णः पुष्यात्वतुलमहिमा मां करुणया ॥१९॥

---

सम्प्रति यतिलक्षणं निर्द्दिशति—यतिरिति। जिह्वाया इष्टं यत् विश्रामस्थानं कविभिः सा यतिरुच्यते निर्द्दिश्यते। यत्र जिह्वा स्वेच्छया उच्चारणाद्विरमति तत्रैव यतिरित्यर्थः। सा च यतिः निजेच्छया उच्चारयितुरिच्छया वाच्या विच्छेदविरामाद्यैः निर्द्दिश्या। विच्छेदविरामविरतिप्रभृतयः शब्दाः यतिपर्य्याया ज्ञातव्याः ॥ १८ ॥

विशेषमाह:—क्वचिदिति। पूर्व्वसूरिभिः पूर्व्वपण्डितैः अभिहिता कथिता यतिः क्वचित् छन्दसि आस्ते वर्त्तते न सर्व्वत्रेति भावः। किन्तु सा यतिः पदान्ते स्थिता सती शोभामुत्कर्षं व्रजति लभते। यत्र छन्दसि यतिनियमस्तत्र चेत् सा पदान्ते नियम्यते तदैव तस्याः सुश्रवतेति भावः। सा यतिः यदि पदमध्ये स्थिता तदा शोभां त्यजति, पदमध्यस्थिता यतिरतिदुःश्रवेति भावः। पुनः किन्तु तत्रैव पदमध्ये एव असौ यतिः स्वरविहितसन्धिः स्वरेण विहितः कृतः सन्धिर्यत्र सा सती तां शोभां श्रयति अवलम्बते। अत्र उदाहरणं दर्शयति—यथेत्यादि। अतुलः न विद्यते तुला उपमा यस्य तादृशः महिमा महत्त्वं यस्य सः अतुलमहिमा कृष्णः, करुणया मां पुष्यातु

---

তখন সংযুক্ত বর্ণের পূর্ব্ববর্ণ হ্রস্ব বলিয়া নির্ণীত হইতে পারে, ইহাতে ছন্দোভঙ্গ হয় না, ইহাই প্রাচীন পণ্ডিতদিগের মত।

১৮। যে যে স্থলে জিহ্বা স্বেচ্ছাপূর্ব্বক বিশ্রামলাভ করে, তাহাকে 'যতি' বলে। উহা উচ্চারণকারীর ইচ্ছানুসারেই হইয়া থাকে। বিচ্ছেদ বিরাম প্রভৃতির নামান্তর যতি।

अयञ्च श्लोकश्छन्दोगोविन्दे मम गुरोः ।

श्वेतमाण्डव्यमुख्यास्तु नेच्छन्ति मुनयो यतिम् ।
इत्याह भट्टः स्वग्रन्थे गुरुर्मे पुरुषोत्तमः ॥ २० ॥

अतएव मुरारिः ।—

सन्तुष्टे तिसृणां पुरामपि रिपौ कण्डूलदोर्मण्डली-
लीलालूनपुनःप्ररूढ़शिरसो वीरस्य लिप्सोर्वरम् ।
याच्ञादैन्यपराञ्चि यस्य कलहायन्ते मिथस्तं वृणु
त्वं वृणवित्यभितो मुखानि स दशग्रीवः कथं कथ्यताम् ॥२१॥

---

रचतु । अत्र शिखरिणी नाम वृत्तं, 'रसै रुद्रैश्छिन्ने'त्यादि तल्लक्षणम् । शिखरिणीवृत्ते प्रथमतः षड्भिरक्षरैर्यतिः कार्य्या ; उदाहृते यथेत्यादिपादे पुष्पे ति पर्य्यन्तं प्रथमा यतिः सा च पदमध्ये स्थिता दुःश्रवेति । पुष्पात्वतुलेति स्वरसन्धिवशतोऽपि शोभाभावः । कविकल्पलतायाम्—एवं यथायथोद्वेगः सुधियां नोपजायते । तथा तथा मधुरता-निमित्तं यतिरिष्यते ॥" यत्र यतिनिर्द्देशे दुःश्रवता न स्यात् तत्र सा यतिरादरणीयेति फलितार्थः ॥ १९ ॥

अयं क्वचिदित्यादि श्लोको मम गुरुभट्टपुरुषोत्तमस्य छन्दोगोविन्दनामकग्रन्थे वर्त्तते । श्वेतेत्यादि ।—श्वेतमाण्डव्यमुख्याः श्वेतमाण्डव्यप्रभृतयः पण्डिताः यतिं न इच्छन्ति न स्वीकुर्व्वन्ति इति मे मम गुरुरध्यापकः पुरुषोत्तमभट्टः स्वग्रन्थे आह उक्तवान् । मतमिदं न मनोरमं यतिभ्रंशदोषापत्तेः । यथाह काव्यादर्शे ।—श्लोकेषु नियतस्थाने पदच्छेदं यतिं विदुः । तदपेतं यतिभ्रष्टं श्रवणोद्वेजनं यथा । २० ।

सन्तुष्टेत्यादि । मुरारिकृतश्लोकोऽयम् । जनकं प्रति रावणपुरोहितस्य शौष्कलस्य उक्तिरियम् । तिसृणां पुरां पुरीणां । 'पुः स्त्रीः पुरीनगर्य्यौ' वेत्यमरः । रिपौ त्रिपुर-हरे शिवे इत्यर्थः, असन्तुष्टेऽपि तपस्यया सन्तुष्टे शिवे वरप्रदानार्थमुपस्थितेऽपि कण्डू-

---

१९—२०। যতি ছন্দের সর্ব্বত্র থাকে না। যদি পদান্তে যতি থাকে তবে

जयदेवोऽपि।—

साध्वी माध्वीक चिन्ता न भवति भवतः शर्करे कर्करासि
द्राक्षे द्रक्ष्यन्ति के त्वाममृत मृतमसि क्षीर नीरं रसस्ते।
माकन्द क्रन्द कान्ताधर धरणितलं गच्छ यच्छन्ति यावद्-
भावं शृङ्गारसारस्वतमयजयदेवस्य विष्वग्वचांसि ॥ २२ ॥

---

तथा युद्धकण्डूयमयुक्तया कण्डू विद्यतेऽस्या इति कण्डूशब्दात् अस्त्यर्थे लच्प्रत्यये कण्डूला इति पदम्। दोर्मण्डल्या वाहुसमूहेन करणेन लीलया अवहेलया लूनानि छिन्नानि पुनः प्ररूढ़ानि पुनः संजातानि शिरांसि यस्य तादृशस्य वरं वाञ्छितं लिप्सोर्लब्धुमिच्छोर्यस्य वीरस्य दशाननस्य मुखानि, याच्ञा दैन्यं प्रार्थनाजनितदीनभावः तेन पराञ्चि पराङ्मुखानि सन्ति, अभितः उभयतः मिथः परस्परं त्वं ब्रूहि त्वं ब्रूहि इति कलहायन्ते कलहं कुर्व्वन्ति। सः यः महेश्वरात् वरप्रार्थनामपि कर्त्तुं कुण्ठितः दशग्रीवः कथं कथ्यतां वर्ण्यतां मयेति शेषः। ईदृशो महामहिमशाली नैव वर्णयितुं शक्य इति। शार्दूलविक्रीड़ितं नाम वृत्तम्। वृत्तेऽस्मिन् द्वादशाक्षरावसाने यतिर्नियता, सा च तृतीयपादे कलहायन्ते इति ह्यावर्णावसाने संलक्षिता ॥ २१ ॥

जयदेवकृतश्लोको यथा—माध्वीति। हे माध्वीक! हे मधो! इह अस्मिन् लोके यावत् यत्कालपर्य्यन्तं शृङ्गारसारस्वतमयजयदेवस्य शृङ्गाररसमयप्रबन्धकवेर्जयदेवस्य वचांसि, कर्तृणि विष्वक् समन्तात् भावं प्रीतिं यच्छन्ति ददति, तावत् भवतः चिन्ता साध्वी मनोरमा न भवति। हे शर्करे! त्वं कर्करा असि कठिनत्वादित्यर्थः। हे द्राक्षे! त्वां के रसिकाः द्रक्ष्यन्ति अगम्यदेशजातत्वात् केऽपि न त्वामाद्रियन्ते। हे अमृत! त्वं मृतमसि जीवन् कस्त्वां प्राप्नोतीति भावः। हे क्षीर! ते तव रसः नीरं जलतुल्यम् आवर्त्तनात् पूर्व्वमस्वादुत्वात्। हे माकन्द! चयुतफल! त्वं क्रन्द! वल्कलाद्यसारांशयुक्तत्वात्। हे कान्ताधर! वनिताधर! त्वं धरणितलं

---

চমৎকারাতিশয় হয়। পদমধ্যে উহা থাকিলে শোভা নষ্ট করে। কিন্তু উক্ত

एवमन्योऽपि।—

कत्यद्रिप्रतिरोधिताः कति नदीपाथोनिधिप्लाविताः
कत्येवाटवितां गताः कति न वा भूदेवदेवैर्हृताः।
भूम्यो भूमिपतीन्द्र तावकयशःप्रस्तावनामण्डली
कोष्ठीकृत्य जगद्धनं कतिवराटीभिर्मुदं यास्यति॥ २३॥

---

रसातलं गच्छ, तव पृथिव्यामवस्थानं न युक्तमित्यर्थः। माध्वीकादि सम्बुध्यमान-पदार्थेभ्यः जयदेववर्णितवाक्यस्य माधुर्य्याधिक्यमिति माध्वीकादिषु तिरस्कारः। स्रग्धरा-नाम वृत्तम्। अत्र तृतीयचरणे सप्तमाक्षरेण विहिता यतिः स्वरसन्धिवशतः सुश्रुवतैव। किन्तु चतुर्थपादे सप्तमचतुर्दशयोर्यतिदोष इति॥ २२॥

कतीत्यादि।—कस्यचित् नृपस्य प्रशस्तिरियम्। हे भूमिपतीन्द्र! भवतः कति भूमाः भूप्रदेशाः अद्रिणा पर्व्वतेन प्रतिरोधिताः व्याप्ताः। कति भूम्यः, नद्यश्च पाथो-निधयश्च तैः प्लाविताः। कति एव कति वा भूमयः, अटवीतां अरण्यत्वं गताः प्राप्ताः गिरिषु अरण्येषु नदीषु समुद्रेषु च भवतो राजत्वमित्यर्थः। कति भूम्यः भूदेवैर्ब्राह्मणैः देवैश्च न वा हृताः गृहीताः ब्राह्मणान् संस्थाप्य देवांश्च प्रतिष्ठाप्य वह्वाः भूमयस्तेभ्यो दत्ताः इत्यर्थः। तावकयशःप्रस्तावनामण्डली त्वद्यशःकीर्त्तनपरम्परा जगद्धनं जगतो वित्तं कोष्ठीकृत्य लक्षयित्वा विषयीकृत्येति यावत्, कतिवराटीभिः कतिपयैर्वराटकैः मुदं सन्तोषं यास्यति लप्स्यते सामान्यं जगद्धनं भवतो नोपयुक्तमिति मत्वा सन्तोषं न प्राप्स्य-तीत्यर्थः। अथवा जगद्धनं जगद्धननामकं कञ्चित् भवदधीनं भौमिकं कोष्ठीकृत्य आक्रम्य कतिवराटीभिर्मुदं सन्तोषं यास्यति लप्स्यते। भवतः कति भूमयः कतिभिः प्रकारैः करगृत्या इष्यन्ते अतो यत्किञ्चित् भूखण्डमुपभुञ्जतो मम पीड़नं न युक्तमिति। अत्र चतुर्थचरणे द्वादशाक्षरे यतिभङ्गः कविनानेन समाहृतः॥ २३॥

---

যতি যদি স্বরবিহিতসন্ধিসমন্বিত হয়, তবে তাহাতে উৎকর্ষ বৃদ্ধিই হয়। উদাহরণ মূলে দ্রষ্টব্য।

आरभ्यैकाक्षरात् पादादेकैकाक्षरवर्द्धितैः ।
पादैरुक्थादिसंज्ञं स्याच्छन्दः षड् विंशतिं गतम् ॥२४॥
उक्थात्युक्था तथा मध्या प्रतिष्ठान्या सुपूर्व्विका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥२५॥
त्रिष्टुप् च जगती चैव तथातिजगती मता ।
शर्करी सातिपूर्व्वा स्यादष्ट्यत्यष्टी तथा स्मृते ॥२६॥
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ।
विकृतिः संस्कृतिश्चैव तथातिकृतिरुत्कृतिः ।
इत्युक्ताश्छन्दसां संज्ञाः क्रमशो वच्मि साम्प्रतम् ॥२७॥

इति छन्दोमञ्जर्य्यां सुखबन्धाख्यः प्रथमः स्तवकः ।

---

अक्षरलाघवगौरवक्रमेण समवृत्तानां नामभेदान् दर्शयति—आरभ्येति । एकमक्षरं अव तादृशात् पादात् आरभ्य एकाक्षरं पादमवधिं कृत्वा इत्यर्थः, एकमेकम् एकैकं तेन अक्षरेण वर्द्धितान्तैः पादैः करणकैः षड्विंशतिं गतं, षड्विंशतिप्रकारकं उक्थादिनामकं छन्दः स्यात् । एकाक्षरेण रचितपादस्य वृत्तस्य नाम उक्था, अक्षर-द्वयेन रचितपादस्य नाम अत्युक्था, एवं क्रमेण षड्विंशत्यक्षरं यावत् षड्विंशतिप्रकारं नाम अवगन्तव्यम् । यथा—१ उक्था २—अत्युक्था । ३—मध्या । ४—प्रतिष्ठा । ५—सुप्रतिष्ठा । ६—गायत्री । ७—उष्णिक् । ८—अनुष्टुप् । ९—बृहती । १०—पङ्क्तिः । ११—त्रिष्टुप् । १२—जगती । १३—अतिजगती । १४—शर्करी । १५—अतिशर्करी । १६—अष्टी । १७—अत्यष्टी । १८—धृतिः । १९—अतिधृतिः । २०—कृतिः । २१—प्रकृतिः । २२—आकृतिः । २३—विकृतिः । २४—संस्कृतिः । २५—अतिकृतिः । २६—उत्कृतिः ॥ २४—२७ ॥

पूर्व्वाचार्य्यैरक्षरभेदेन छन्दसामुक्थादिनामभेदा उक्ता, अहं पुनस्तानेवावलम्ब्य लक्ष्यलक्षणनिर्द्देशपुरःसरं लघुगुरुभेदेन बहुलान् नामभेदान् प्रपञ्चयिष्यामि ।

समाप्तेयं प्रथमस्तवकव्याख्या ।

২৪। অক্ষরের হ্রাস বৃদ্ধি অনুসারে সমবৃত্তছন্দের নাম নির্দ্দেশ করিতেছেন,—এক অক্ষরবিশিষ্ট চরণ হইতে আরম্ভ করিয়া এক এক অক্ষর বৃদ্ধি হইয়া ২৬ অক্ষর পর্য্যন্ত ছন্দের নাম উক্‌থাদি। অর্থাৎ যে শ্লোকের প্রত্যেক চরণে ১টি বর্ণ থাকে, তাহাকে উক্‌থা। দুইটী করিয়া বর্ণ প্রত্যেক চরণে থাকিলে অত্যুক্‌থা, এরূপ ৩টি থাকিলে মধ্যমা। এইরূপ ২৬ অক্ষর পর্য্যন্ত বিভিন্ন নাম হইবে। মূল দ্রষ্টব্য॥

প্রথম স্তবক॥

---

# द्वितीयः स्तवकः ।

## अथ समवृत्तम् ।

उक्था ( एकाक्षरा वृत्तिः ) ।

ग

१। ग् 'श्रीः' ।

श्रीस्ते । सास्ताम् ॥

---

१। एकाक्षरपादं समवृत्तं निर्दिशति—ग् श्रीरिति। यत्र पादे गः एको वर्णो गुरुः, सा श्रीर्नाम वृत्तम्, गुर्व्वेकाक्षरघटितैकपादस्य वृत्तस्य श्रीरिति संज्ञा ज्ञातव्येत्यर्थः। सर्व्वेष्वेव लक्षणेषु शब्दविन्यासनैपुण्येन पुनरुदाहरणीकृतेष्वपि कुमाराणां बोधसौकर्य्याय सर्व्वत्रैव पृथग्रूपेण पुनरुदाहरणानि उल्लिख्यानि, तत्र प्रथमं श्रीवृत्तस्य उदाहरणं यथा—श्रीरिति। सा प्रसिद्धा श्रीर्लक्ष्मीः सरस्वती वा ते तव सम्बन्धे आस्ताम् अस्तु। अथवा सा ( यस्या लक्षणमुक्तं ) श्रीः श्रीर्नाम वृत्तं ते तव अस्तु ज्ञानविषया भवतु इत्यर्थः। कविना कौशलेन सर्व्वत्रैव उदाहरणेषु तत्तद्वृत्तनामान्यपि दर्शयितव्यानि।

---

১। প্রত্যেকপাদে "গ" গণ মাত্র থাকিলে ( অর্থাৎ একটী গুরু অক্ষর মাত্র একপাদে থাকিলে ) তাহাকে "শ্রী"ছন্দঃ বলা হয়। ( সর্ব্বত্র উদাহরণ মূলে দ্রষ্টব্য )।

अत्युक्था ( द्व्यक्षरा वृत्तिः )।

ग ग

२। गौ 'स्त्री'।

गोपस्त्रीभिः। कृष्णो रेमे॥

मध्या ( त्र्यक्षरा वृत्तिः )।

म

३। मो 'नारी'।

गोपानां नारीभिः। श्लिष्टोऽव्यात् कृष्णो वः॥

र

४। रो 'मृगी'।

सा मृगीलोचना। राधिका श्रीपतेः॥

---

२। द्व्यक्षरपादं वृत्तं लक्षयति—गाविति। यत्र गौ द्वावेव वर्णौ गुरू वर्त्तेते सा स्त्री नाम वृत्तम्भवति। यथा—गोप इत्यादि। अस्यार्थः—कृष्णः गोपस्त्रीभिः सह रेमे क्रीड़ितवान्।

३। म इति। यस्याः पादे मः मगणः अर्थात् त्रय एव वर्णा गुरवः सन्ति, सा नारी नाम वृत्तम्भवेत्। उदाहरणं यथा—गोपानामित्यादि। गोपानां नारीभिः श्लिष्टः आलिङ्गितः युगलमूर्त्तिरित्यर्थः, कृष्णः वः युष्मान् अव्यात् रक्षतु।

४। र इति। यस्याः पादे रः—लघुमध्यवर्णत्रयात्मको रगणः वर्त्तते सा मृगी

---

২। প্রত্যেকপাদে দুইটি "গ" গণ ( গুরু অক্ষর ) মাত্র থাকিলে তাহাকে "স্ত্রী" ছন্দঃ বলা হয়।

৩। যে ছন্দের প্রত্যেকপাদে একটি করিয়া "ম" গণ ( তিনটী গুরু বর্ণ ) মাত্র থাকে, তাহাকে "নারী" ছন্দঃ কহে।

৪। প্রত্যেক পাদে একটি "র" গণ ( আদি ও অন্ত গুরু মধ্যলঘু ) মাত্র থাকিলে তাহাকে "মৃগী" ছন্দঃ কহে।

प्रतिष्ठा ( चतुरक्षरा वृत्तिः ) ।

ग म

५ । ग्मौ चेत् 'कन्या' ।

भास्वत्कन्या सैका धन्या । यस्याः कूले कृष्णोऽखेलत् ॥

न ग

६ । नगि 'सती' ।

सुररिपो तव पदम् । नमति सा ननु सती ॥

---

नाम वृत्तं भवेत् । यथा—श्रीत्यादि । श्रीपतेः श्रीकृष्णस्य सा मृगीलोचना, मृग्या हरिण्या लोचने इव लोचने यस्याः सा राधिका प्रेयसी इत्यर्थः ।

५ । ग्मावित्यादि । गश्च मश्चेति द्वन्द्वे ग्मौ इति । यस्याः पादे गः एको गुरुः एवं मस्य मगणस्य वर्त्तते । चत्वारो गुरव इत्यर्थः । सा कन्या नाम वृत्तं भवेत् । उदाहरणं यथा—भास्वदित्यादि । सा एका केवला भास्वतः सूर्य्यस्य कन्या यमुना । 'भास्वद्विवस्वदित्यादि', 'कालिन्दी सूर्य्यतनया' इत्यादि च अमरः । धन्या पुण्यशालिनी । यस्याः भास्वत्कन्यायाः कूले तीरे कृष्णः अखेलत् क्रीड़ितवान् ।

६ । नगीत्यादि । नश्च गश्च तयोः समाहारः तस्मिन् नगि । सप्तम्येकवचनम् । विग्रहवाक्ये उच्चारणानुरोधात् ग इति अकारान्तनिर्द्देशः । नगणे त्रिलघुस्वरूपे तत्र एकस्मिन् गुरौ च सति, सती नाम वृत्तम्भवेत् । उदाहरणं—सुरेत्यादि । ननु हे सुररिपो । श्रीकृष्ण ! "प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु" इति कोषः । सा सती साध्वी गोपिका, तव पदं नमति प्रणमतीत्यर्थः ।

---

৫। যে ছন্দের প্রত্যেকপাদে একটী "গ" গণ ও একটী "ম" গণ ( অর্থাৎ চারিটী গুরু অক্ষর ) মাত্র থাকে, তাহাকে 'কন্যা' ছন্দঃ কহে।

৬। যে ছন্দের প্রত্যকপাদে প্রথমতঃ একটী "ন" গণ ( অর্থাৎ তিনটী লঘু ) ও তৎপরে একটী "গ" গণ ( একটী গুরু ) মাত্র থাকে, তাহাকে 'সতী' ছন্দঃ কহে।

सुप्रतिष्ठा ( पञ्चाक्षरा वृत्तिः ) ।

भ　ग　ग

७। भ्गौ गिति 'पङ्क्तिः' ।

कृष्णसनाथा तर्णकपङ्क्तिः। यामुनकच्छे चारु चचार ॥

स ल ग

८। सलगैः 'प्रिया' ।

व्रजसुभ्रुवो विलसत्कलाः। अभवन् प्रिया सुरवैरिणः ॥

---

७। भ्गावित्यादि । यत्र भ्गौ—भगणः गद्वयञ्च वर्त्तते, एतेन प्रथमो वर्णो गुरुस्ततो वर्णद्वयं लघु, ततो वर्णद्वयं गुरु, एवंप्रकाराः पञ्च वर्णा वर्त्तन्ते, सा पङ्क्तिर्नाम वृत्तं भवेत् इत्यर्थः। उदाहरणं यथा—कृष्णे ति। तर्णकपङ्क्तिः वत्सश्रेणिः 'शकृत्करिस्तु वत्सः स्यात् वत्सकतर्णका'वित्यमरः। कृष्णसनाथा कृष्णसहिता सती, यामुनकच्छे यमुनाया अयं यामुनः स चासौ कच्छश्चेति तस्मिन्, यमुनापुलिने इत्यर्थः। "जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः" इत्यमरः। चारु मनोरमं यथा स्यात् तथा क्रियाविशेषणम्। चचार भ्रमति स्म। चरधातोर्लिटि रूपम्।

८। सलगैरिति। सश्च लश्च गश्च सलगाः तैः प्रिया नाम वृत्तं भवेत्। यस्याः पादे प्रथमतो वर्णद्वयं लघु तत एको गुरुः तत एको लघुः ततश्च एको गुरुर्वर्त्तते सा प्रिया भवेदित्यर्थः। यथा—व्रजसुभ्रुव इत्यादि। अस्यार्थः।—विलसत्कला विकसन्त्यः स्फुरन्त्यः कलाः नृत्यादयः कामविद्या यासां ताः व्रजसुभ्रुवः व्रजयोषितः सुरवैरिणः श्रीकृष्णस्य प्रियाः दयिता अभवन्।

---

৭। যে ছন্দের প্রত্যেকপাদে প্রথমতঃ "ভ" গণ ( অর্থাৎ আদি অক্ষর গুরু ও পর দুইটী লঘু ) ও পরে দুইটী "গ" গণ মাত্রথাকে, তাহাকে "পঙ্‌ক্তি" ছন্দঃ কহে।

৮। যে ছন্দের প্রত্যেক পাদে প্রথমতঃ একটী "স" গণ (২টী লঘু

गायत्री ( षडक्षरा छन्दिः )।

त य

९। त्यौचेत् 'तनुमध्या'।

(क) मूर्त्तिस्तु रश्मलीवत्यद्भुतरूपा।
आस्तां मम चित्ते, नित्यं तनुमध्या॥

(ख) नश्यन्ति ददर्शं, वृन्दानि कपीन्द्रः।
हारीण्यबलानां, हारीण्यबलानाम्॥

इति मष्टी १०।१२।

पादान्तत्वेन ददर्शेत्यत्र गुरुत्वम्।

---

९। त्याविति। तश्च यश्च त्यौ, चेत् यदि त्यौ वर्त्तेते तदा तनुमध्या नाम वृत्तं भवति। यस्याः पादे तगणो यगणश्च वर्त्तेते सा तनुमध्या नाम वृत्तम्। यथा— मूर्त्तीत्यादि। अस्यार्थः—अत्यद्भुतं रूपं यस्याः सा, तनु क्षीणं मध्यं यस्याः सा, मुरध्वनेः श्रीकृष्णस्य मूर्त्तिर्मम चित्ते आस्ताम्।

एकाक्षरादिवृत्तयः काव्ये प्रयुक्ता न दृश्यन्ते, तनुमध्यादीनान्तु काव्ये प्रचारो दृष्टिगोचर इति भट्टिश्लोकमप्युदाहरति—नश्यन्तीत्यादि। अस्यार्थः—कपीन्द्रः कपिश्रेष्ठः हनूमानित्यर्थः। न विद्यते बलं सहायो यासां तासां रक्षकरहितानामित्यर्थः, अबलानां रमणीनां हारीणि हारयुक्तानि, हारीणि मनोहराणि वृन्दानि समूहान् नश्यन्ति

---

ও একটী গুরু ) পরে "ন" গণ ( একটী লঘু ) ও তৎপরে একটী "গ" গণ ( একটী গুরু ) মাত্র থাকে, তাহাকে "প্রিয়া" ছন্দঃ কহে।

৯। যে ছন্দের প্রতিপাদে প্রথম "ত" গণ ( অন্ত্যলঘু ) পরে একটী "য" গণ ( আদিলঘু ) মাত্র থাকে, তাহাকে 'তনুমধ্যা' কহে।

न य

१०। 'शशिवदना' न्यौ।

शशिवदनानां व्रजतरुणीनाम्।

अधरसुधोर्म्मिं मधुरिपुरैच्छत्॥

य य

११। द्विया 'सोमराजी'।

। ऽ ऽ । ऽ ऽ

हरे सोमराजीसमा ते यशःश्रीः।

जगन्मण्डलस्य भिनत्त्यन्धकारम्॥

---

नाशं प्राप्नुवन्ति इति ददर्श। लङ्कादाहकाले तत्रत्या रमण्यः निःसहाया एव विनष्टा इति हनुमानपश्यत्। नश्यन्तीति शतृङन्तस्य नशधातोः क्लीवलिङ्गे द्वितीयाबहुवचने रूपम्, विधेयविशेषणमेतत्। यगणे प्रथमवर्णस्यैव लघुत्वं निर्द्दिष्टं परयोस्तु न तयोरिति दृष्टेऽन्त्यस्य पादान्तत्वात् गुरुत्वं स्वीकृतमिति।

१०। शशीति। नश्च यश्च न्यौ। यत्र नगणः यगणश्च वर्त्तते सा शशिवदना नाम वृत्तम्भवति। उदाहरणं शशिवदनेति—अस्यार्थः—मधुरिपुः श्रीकृष्णः, शशिवदनानां शशी चन्द्र इव वदनं यासां तासां व्रजतरुणीनां व्रजयुवतीनां अधरसुधोर्म्मिं अधरामृतलहरीम् ऐच्छत् अभिलषितवान्। उपमारूपकालङ्कारः।

११। द्वियेति। द्वौ यौ यगणौ यत्र सा द्विया, सोमराजी नाम वृत्तं भवति। यस्याः पादे आदिलघुवर्णत्रयात्मकं यगणद्वयं वर्त्तते सा सोमराजी वृत्तम्। उदाहरणं—

---

১০। যে ছন্দের প্রতিপাদে প্রথম "ন" গণ ও পরে "য" গণ মাত্র থাকে, তাহাকে "শশিবদনা" ছন্দঃ কহে।

১১। যে ছন্দের প্রতিপাদে দুইটী মাত্র "য" গণ থাকে, তাহাকে "সোমরাজী" ছন্দঃ কহে।

म म

१२। 'विद्युल्लेखा' मो मः।

उष्णिक् ( समाक्षरा वृत्तिः )।

न न ग

१३। ननगि 'मधुमती'।

।। ।।।।ऽ

रविदुहितृतटे, वनकुसुमततिः। व्यधित मधुमती मधुमथनमुदम्॥

---

हरे इत्यादि। अस्यार्थः—हे हरे! श्रीकृष्ण! सोमराजी चन्द्रावली तत्समा तत्तुल्या ते तव यशःश्री यशःसम्पत् यशोराजिरित्यर्थः। अथवा यशःश्री यशःशोभा जगन्मण्डलस्य अन्धकारं पापरूपमित्यर्थः, छिनत्ति दूरीकरोति। उपमालङ्कारः।

१२। विद्युल्लेखेति। यस्याः पादे प्रथमं मगणः ततोऽपि मगणो वर्त्तते सा विद्युल्लेखा नाम वृत्तम्भवति।

१३। ननेति। नश्च नश्च गश्च तेषां समाहारः ननग् तस्मिन् ननगि वर्त्तमाने मधुमती नाम वृत्तम्भवति। यस्याः पादे आदौ नगणः ततोऽपि नगणः तत एको गुरुर्वर्त्तते सा मधुमती नाम वृत्तं कथ्यते। उदाहरणं—रवीत्यादि। अस्यार्थः—रवि-दुहिता यमुना। "कालिन्दी सूर्य्यतनया यमुना शमनस्वसे"त्यमरः। तस्यास्तटे मधुमती मधुयुता सद्यःप्रस्फुटितेत्यर्थः, वनकुसुमततिः वनपुष्पराजिः। मधुं दैत्यविशेषं ( पुष्प-रसञ्च ) मथ्नातीति मधुमथनः श्रीकृष्णः मधुकरश्च तस्य मुदं सन्तोषं व्यधित कृतवती। विपूर्व्वो धाञ् करोत्यर्थः। अत्र मकारस्य असकृदावृत्तेर्वृत्त्यनुप्रासः शब्दालङ्कारः, श्लेषश्चार्थालङ्कारः।

---

১২। যে ছন্দের প্রতিপাদে দুইটী "ম" গণ মাত্র থাকে, তাহাকে 'বিদ্যুল্লেখা' কহে।

১৩। যে ছন্দের প্রতিপাদে প্রথমতঃ দুইটী "ন" গণ ও পরে একটী "গ" গণ মাত্র থাকে, তাহাকে 'মধুমতী' কহে।

ज स ग

१४। 'कुमारललिता' ज्सगाः।
मुरारीतनुवल्ली कुमारललिता सा ।
व्रजैणनयनानां ततान मुदमुच्चैः ॥

म स ग

१५। म्सौ गः स्यात् 'मदलेखा'।
रङ्गे बाहुविरुग्णाद्दन्तीन्द्रान्मदलेखा।
लग्नाभून्मुरशत्रौ कस्तूरीरसचर्चा ॥

---

१४। कुमारेति। जश्च सश्च गश्च ज्सगाः। यस्याः पादे प्रथमतो जगणः ततः सगणः तत एको गुरुर्व्वर्णो वर्त्तते सा कुमारललिता नाम वृत्तम्भवति। उदाहरणं यथा—मुरारीति। अस्यार्थः—मुरस्य अरिः मुरारिः श्रीकृष्णः तस्य तनुः शरीरं वल्लीव लतेव। कुमारेण कौमारवयसा ललिता मनोरमा, कुमारवत् कार्त्तिकेयवत् ललिता वा। एणस्य नयने इव नयने यासां ताः व्रजस्य एणनयनाः व्रजैणनयनास्तासां व्रजहरिणाक्षीणां व्रजसुन्दरीणामित्यर्थः, उच्चैः अत्यर्थं मुदम् सन्तोषम्। "मुत् प्रीतिः प्रमदो हर्षः" इत्यमरः। ततान वितस्तार। उपमालङ्कारः।

१५। म्साविति। मश्च सश्च म्सौ। यस्याः पादे प्रथमतो मगणः ततः सगणः ततश्च गकारः (एको गुरुः) वर्त्तते सा मदलेखा नाम वृत्तं भवति।

---

১৪। যে ছন্দের প্রতিপাদে প্রথমতঃ "জ" গণ (মধ্যগুরু) পরে "স" গণ (অন্ত্যগুরু) ও তৎপরে "গ" গণ (১টী দীর্ঘ) মাত্র থাকে, তাহাকে "কুমারললিতা" ছন্দঃ কহে।

১৫। যে ছন্দের প্রতিপাদে প্রথমতঃ "ম" গণ পরে "স" গণ ও তৎপরে "গ" গণ মাত্র থাকে, তাহাকে 'মদলেখা' ছন্দঃ কহে।

अनुष्टुप् ( अष्टाक्षरा वृत्तिः । )

भ भ ग ग

१६। 'चित्रपदा' यदि भौ गौ।

यामुनसैकतदेशे गोपवधूजलकेलौ।
कंसरिपोर्गतिलीला चित्रपदा जगदव्यात्॥

भ त ल ग

१७। भात्तलगा 'माणवकम्'।

---

उदाहरणं—रङ्ग इत्यादि। रजत्यस्मिन्निति रङ्गः रणचैत्वम् तस्मिन् बाहुविक्रमात् भुजेन दलितात् दन्तीन्द्रात् हस्तिश्रेष्ठात् कुवलयापीड़ादिति भावः। मुरश्री श्रीकृष्णे लग्ना संक्रान्ता मदलेखा मदजलरेखा कस्तूरीरसचर्चा कस्तूरीरसेन मृगनाभिद्रवेण या चर्चा अङ्गरागः सा अभूत्। रणनिर्ज्जितस्य कुवलयापीड़ाख्यकरिणो मदजलरेखा श्रीकृष्ण-शरीरे संलग्ना सती कस्तूरीरसचर्च्चेव अभूदिति प्रतीयमानोत्प्रेक्षा।

१६। चित्रेति। यदि प्रथमतः भौ भगणौ ततो गौ द्वौ गुरू इत्यर्थः, वर्त्तेते, तदा चित्रपदा नाम वृत्तम्भवेत्। उदाहरणं—यामुनेति। यमुनासम्बन्धी यः सैकतदेशः सिकतामयस्थानं "सैकतं सिकतामय"मित्यमरः। तस्मिन् गोपवधूनां गोपीनां जल-केलौ जलक्रीड़ायां कंसरिपोः श्रीकृष्णस्य चित्रपदा चित्रं अद्भुतं पदं पादन्यासः यस्यां सा गतिलीला नृत्यमिति शेषः, जगत् विश्वम् अव्यात् रक्षतु।

१७। भेति। यस्य पादे भात् भगणात् परं तलगाः—तगणः लकारो गकारश्च वर्त्तन्ते तत् माणवकं नाम वृत्तं भवति। उदाहरणं—चञ्चेति। अस्यार्थः—हे सखे!

---

১৬। যে ছন্দের প্রতিপাদে প্রথমতঃ দুইটী "ভ" গণ ও পরে দুইটী "গ" গণ মাত্র থাকে, তাহাকে 'চিত্রপদা' কহে।

১৭। যে ছন্দের প্রতিপাদে যথাক্রমে একটী "ভ" গণ, "ত" গণ, "ল" গণ ও "গ" গণ মাত্র থাকে, তাহাকে 'মাণবক' ছন্দঃ কহে।

।ऽ। ।

चञ्चलचूड़ञ्चपलैर्वत्सकुलैः केलिपरम् ।
ध्याय सखे स्मेरमुखं नन्दसुतं माणवकम् ॥

म म ग ग

१८ । मो मो गो गो 'विद्युन्माला' ।

ऽऽऽऽऽऽऽऽ

वासोवल्ली विद्युन्माला वर्हश्रेणी शाक्रश्चापः ।
यस्मिन् स स्यात् तापोच्छित्त्यै गोमध्यस्थः कृष्णाम्भोदः ॥

---

हे मित्र ! चञ्चला चूड़ा यस्य तं चञ्चलचूड़ं चपलैर्वत्सकुलैः वत्सयूथैः "सजातीयैः कुलं यूथ"मित्यमरः । केलिपरं क्रीड़न्तं, माणवकं बालकं, स्मेरं ईषद्धासयुक्तं मुखं यस्य तं नन्दसुतं श्रीकृष्णं, ध्याय चिन्तय ।

१८ । मो म इति । यस्याः पादे आदौ मः ततोऽपि मः, षट् वर्णा गुरव इत्यर्थः । ततो गः ततोऽपि गः, अष्टावेव वर्णा गुरव इत्यर्थः । सा विद्युन्माला नाम वृत्तं भवति । "सर्व्वे वर्णा दीर्घा यस्यां विश्रामः स्याद्वेदैर्वेदैः । विद्वद्वृन्दैर्वीणा-पाणि । प्रख्याता सा विद्युन्माला" इति श्रुतबोधधृतलक्षणात् विद्युन्मालायां वृत्ते चतुर्थे वर्णे यतिर्विधातव्या । उदाहरणमाह—वास इति । यस्मिन् कृष्णाम्भोदे, वासोवल्ली, मृदुत्वादायतत्वाच्च वल्ल्या साम्यं, वसनलता पीतवस्त्रमिति भावः । विद्युन्माला तड़ित्, वर्हश्रेणी मयूरपिच्छपङ्क्तिः शाक्रः चापः इन्द्रधनुरित्यर्थः । स गोमध्यस्थः धेनुमण्डलीमध्यस्थितः पक्षान्तरे गवोः द्यावाभूम्योर्मध्यं वियत्, तत्र स्थितः, कृष्णः श्रीकृष्ण एव अम्भोद मेघः पक्षान्तरे कृष्णवर्णो यः अम्भोदः । तापोच्छित्त्यै

---

১৮। যে ছন্দের প্রতিপাদে যথাক্রমে দুইটী "ম" গণ ও দুইটী "গ" গণ মাত্র থাকে, তাহাকে 'বিদ্যুন্মালা' ছন্দঃ কহে।

गलरज

१९। ग्लौ रजौ 'समानिका' तु।

यस्य कृष्णपादपद्ममस्ति हृत्तड़ागसद्म।
धीः समानिका परेण नोचिताऽत्र मत्सरेण॥

---

तापः आधिभौतिकादिसांसारिकदुःखत्रयम्। निदाघजनितो दाहश्च। तस्य उच्छित्त्यै विनाशाय। उत्पूर्व्वकच्छिदधातोर्भावे क्तिः। स्तात् भवतु। अस्तेर्लोट्, आशीरर्थे तस्थाने तातङ्। स्वर्गेषु वसुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौर्लिङ्गं चिह्नशेफयोः।" इत्यमरः। व्यस्तं समस्तञ्च साङ्गरूपकमिदम्।

१९। ग्लाविति। यस्याः पादे प्रथमं गः,—एको गुरुः, ततो लः—एको लघुः ततो रः—रगणः, ततो जः—जगणः, वर्त्तते सा समानिका नाम वृत्तं भवेत्। पूर्व्वं गुरुः ततो लघुः एवं क्रमो यदि अष्टाक्षरं यावत् भवेत्, तदा समानिकाख्यं वृत्तं स्यादित्यर्थः। उदाहरणं—यस्येति। अस्यार्थः—कृष्णपादपद्मं श्रीकृष्णचरणकमलं यस्य भक्तजनस्य। हृत् हृदयमेव तड़ागं पद्माकरः जलाशयविशेषः। "पद्माकर-स्तड़ागोऽस्त्री"त्यमरः। तदेव सद्म आश्रयो यस्य तत् अस्ति, यस्य हृदयपद्माकरे श्रीकृष्ण-पादपद्मं तिष्ठतीत्यर्थः। अत्र भक्तजने, मत्सरेण "मत्सरोऽन्यशुभद्वेषे" इत्यमरः। अत्र तद्युक्ते उपचारात् मत्सरिणा अन्यशुभद्वेषिणा इत्यर्थः, परेण अन्यजनेन समानिका तुल्या धीर्बुद्धिर्न उचिता युक्ता। मत्सरिणि अन्यजनेन या घृणाबुद्धिर्भवति सा न अस्मिन् कृष्णभक्ते कर्त्तव्येति। अथवा मत्सरेण मात्सर्य्येण हेतुना परेण शत्रुणा समानिका तुल्या बुद्धिर्न उचिता, मात्सर्य्यात् इमं शत्रुं न जानीहि आत्मीयं मन्यस्वेत्यर्थः। श्रीकृष्णभक्तः कस्यापि न शत्रुरिति हृदयम्।

---

১৯। যে ছন্দের প্রতিপাদে যথাক্রমে একটি করিয়া "গ" গণ "ল" গণ "র" গণ ও "জ" গণ মাত্র থাকে, তাহাকে 'সমানিকা' ছন্দঃ কহে।

ज र ल ग

२०। 'प्रमाणिका' जरौ लगौ।

(क) पुनातु भक्तिरच्युता सदाच्युताङ्घ्रिपद्मयोः
श्रुतिस्मृतिप्रमाणिका भवाम्बुराशितारिका ॥

(ख) मतल्लिका मचर्चिका प्रकाण्डमुद्घतल्लजौ।
प्रशस्तवाचकान्यमून्ययः शुभावहो विधिः ॥
इत्यमरकोषः।

न भ ल ग

२१। नभलगा 'गजगतिः'।

रविसुतापरिसरे विहरतो दृशि हरेः
व्रजवधूगजगतिर्मुदमलं व्यतनुत।

---

२०। प्रमेति। यस्याः पादे आदौ जगणस्तदनन्तरं रगणस्तदनन्तरं एको लघुस्तदनन्तरं एको गुरुर्वर्त्तते सा प्रमाणिका नाम वृत्तम्भवति। उदाहरणं—पुनात्विति। श्रुतिर्वेदः, स्मृतिर्धर्म्मसंहिता, ते प्रमाणं यस्याः सा ; भवाम्बुराशिः संसारसमुद्रस्तस्य तारिका पारकर्त्री, अच्युता अविच्छिन्ना अस्खलितेति यावत्, अच्युताङ्घ्रिपद्मयोः श्रीकृष्णचरणकमलयोर्भक्तिः अनुरागविशेषः सदा सततं पुनातु भक्तान् पवित्रीकरोतु इत्यर्थः।

उदाहरणान्तरं—मतल्लिकेति। अमूनि मतल्लिकादितल्लजान्तानि पञ्च पदानि प्रशस्तवाचकानि प्रशस्तार्थानि यथा गोमतल्लिकाप्रभृति। शुभावहः मङ्गलजनकः विधिः अयम् अभिधीयते।

---

২০। যে ছন্দের প্রতিপাদে যথাক্রমে "জ" গণ, "র" গণ, "ল" গণ ও "গ" গণ মাত্র থাকে, তাহাকে 'প্রমাণিকা' ছন্দঃ কহে।

২১। যে ছন্দের প্রতিপাদে যথাক্রমে একটী করিয়া "ন" গণ "ভ" গণ 'ল' গণ "গ" গণ মাত্র থাকে, তাহাকে 'গজগতি' ছন্দঃ কহে।

अवतु वो गिरिसुता शशिभृतः प्रियतमा।
वसतु मे हृदि सदा भगवतः पदयुगम्॥
इति क्वापि।

भ न ग ग
२२। म्नौ गौ 'हंसरुत'मेतत्।

त र ल ग
२३। 'नाराचिका' तरौ लगौ।

---

२१। नमिति। यत्र नभलगा वर्त्तन्ते सा गजगतिर्नाम वृत्तम्भवति। उदाहरणं —रवीत्यादि। व्रजवधूनां व्रजयुवतीनां गजगतिः गजवन्मन्थरगमनं कर्त्री, रविसुता-परिसरे यमुनातटे विहरतः विहारं कुर्व्वतः हरेः श्रीकृष्णस्य दृशि लोचने अलम् अतिमात्रां मुदं प्रीतिं व्यतनुत वर्द्धितवती।

अन्यच्च—अवत्विति। शशिनं बिभर्त्तीति शशिभृत् चन्द्रशेखरः शिवः तस्य प्रियतमा या असौ गिरिसुता पार्व्वती, वः युष्मान् अवतु रक्षतु। एवं मे मम हृदि सदा भगवतः ईश्वरस्य पदयुगं वसतु तिष्ठतु।

२२। म्नाविति। यत्र मगणात् परं नगणः, ततो गौ द्वौ वर्णौ गुरू इत्यर्थः, एतत् वृत्तं हंसरुतं नाम कथ्यते।

२३। तरेति। यत्र आदौ तगणः ततो रगणः तत एको लघुस्तत एको गुरुः वर्त्तते सा नाराचिका नाम वृत्तम्भवति।

---

২২। যে ছন্দের প্রতিপাদে যথাক্রমে একটী করিয়া "ম" গণ "ন" গণ ও দুইটী "গ"গণ থাকে, তাহাকে 'হংসরুত' ছন্দঃ কহে।

২৩। যে ছন্দের প্রতিপাদে যথাক্রমে একটী করিয়া "ত" গণ "র" গণ "ল" গণ ও "গ"গণ থাকে, তাহাকে 'নারাচিকা' কহে।

बृहती ( नवाक्षरा वृत्तिः ) ।

न न म

## २४ । 'भुजगशिशुभृता' नौ मः ।

I I I I I I S S S

ह्रदतटनिकटक्षोणी भुजगशिशुभृता यासीत् ।
मुररिपुदलिते नागे व्रजजनसुखदा साभूत् ॥

भ म स

## २५ । स्यात् 'मणिमध्यं' चेद्भमसाः ।

S I I S S S I I S

कालियभोगाभोगगतस्तन्मणिमध्यस्फीतरुचा ।
चित्रपदाभो नन्दसुतश्चारु ननर्त्त स्मेरमुखः ॥

---

२४ । भुजेति । यत्र प्रथमतः नौ—षड़ेव वर्णा लघवः, ततो म—त्रय एव वर्णा गुरवः, सा भुजगशिशुभृता नाम वृत्तमुच्यते । उदाहरणं—ह्रदेति । या ह्रदतट-निकटक्षोणी कालीयह्रदतीरसमीपवर्त्तिभूमिः, भुजगशिशुभृता भुजगाः सर्पाः तेषां शिशवः शावकाः तैर्व्याप्ता आसीत् । नागे कालियाख्ये सर्पे मुररिपुणा श्रीकृष्णेन दलिते विनाशिते सति, सा भूमिः व्रजजनानां सुखदा निर्व्विघ्नसञ्चारत्वात् इत्यर्थः, अभूत् । सौभरिशापात् कालीयह्रदे गरुत्मत आगमनं निषिद्धमिति मत्वा कालियो नागः सपरिजनस्तत्र समवात्सीदिति पौराणिकी वार्त्ता अनुसन्धेया । कैश्चिदाधुनिकैः लघवो लघ्व्यं च भृतेत्यत्र वृतेति पठ्यते ।

२५ । स्यादिति । चेत् यदि भमसाः तदाख्या गणा विन्यस्यन्ते तदा मणिमध्यं नाम वृत्तम्भवति । उदाहरणं कालियेति । कालियस्य तदाख्यनागस्य यो भोगः

---

২৪ । যে ছন্দের প্রতিপাদে যথাক্রমে দুইটী "ন"গণ ও একটী "ম" গণ থাকে, তাহাকে 'ভুজগশিশুভৃতা' কহে।

২৫ । প্রতিপাদে যথাক্রমে একটী করিয়া "ভ" "ম" ও "স" গণ মাত্র থাকিলে তাহাকে 'মণিমধ্য' কহে।

स ज र

२६ । सजरै'र्भुजङ्गसङ्गता' ।

। । ऽ । ऽ । ऽ । ऽ

तरला तरङ्गरिङ्गितैर्यमुना भुजङ्गसङ्गता ।
कथमेति वत्सचारकश्चपलः सदैव तां हरिः ॥

२७ । रान्नसाविह 'हलमुखी' ।

---

फणा, 'भोगः सुखफणे चाहेः' इति कोषः । तस्य आभोगः विस्तारः मण्डलाकारः इत्यर्थः, तत्र गतः समाश्रित इत्यर्थः । तस्य कालियस्य यो मणिः शिरःस्थितरत्नं तन्मध्यात् स्फीतया वृद्धिं प्राप्तया रुचा रोचिषा चित्रपदाभः समुज्ज्वलचरणकान्तिः स्मेरमुखः ईषत्हासान्वितवदनः नन्दसुतः श्रीकृष्णः चारु मनोहरं यथा स्यात् तथा ननर्त, नृत्यं कृतवान् ।

२६ । सजेति । सजरैर्गणैर्घटिता भुजङ्गसङ्गता नाम वृत्तम्भवति । उदाहरणं—तरलेति । यमुना कालिन्दी, तरङ्गरिङ्गितैः ऊर्म्मिसमुद्गमैः कारणभूतैः तरला चञ्चला अपिच भुजङ्गसङ्गता सर्पव्याप्ता, तां यमुनां, वत्सचारकः अल्पवयस्कत्वात् वत्सानामेव संरक्षणादिकर्म्मणि नियुक्तः सदैव चपलः चञ्चलस्वभावः हरिः कथं एति गच्छति । अत्र अर्थालङ्कारः काव्यलिङ्गं, शब्दालङ्कारश्च वृत्त्यनुप्रास इति ।

२७ । रान्नेति । हलमुखी नाम यद्वृत्तम्भवति इह वृत्ते रात् रगणात् परं नसौ गणौ भवेतामिति ।

---

২৬। যথাক্রমে প্রতিপাদে একটী করিয়া "স" "জ" ও "র" গণ মাত্র থাকিলে তাহাকে 'ভুজঙ্গসঙ্গতা' কহে।

২৭। প্রতিপাদে যথাক্রমে একটি করিয়া "র" "ন" ও "স" গণ মাত্র থাকিলে তাহাকে 'হলমুখী' কহে।

२८। 'भद्रिका' भवति रो नरौ ।

इति छं पं ।

२९। द्विगुणनगणसहितः सगण इह विहितः ।
फणिपतिमतिविमला क्षितिप भवति 'कमला' ॥

इति छं पं ।

३०। अङ्गोन्माना वर्णा यत्र स्युः,
सर्व्वे दीर्घाः सर्पेशेनोक्तम् ।
रूपामालीसंज्ञं तद्वृत्तं,
यस्मिंश्चेतः केषाञ्चिदृत्तम् ॥

इति छं पं ।

---

२८। भद्रकेति। यत्र आदौ रः, ततो नरौ गणौ वर्त्तेते, सा भद्रिका नाम वृत्तं भवेत् ।

२९। हे क्षितिप! राजन्! फणिनां पतिः अनन्तः तस्य मतिरिव विमला निर्म्मला, कमला नाम वृत्तम्भवति। इह वृत्ते द्विगुणनगणसहितः नकारद्वयसमन्वितः सगणः विहितः यदि आदौ नगणः ततोऽपि नगणः ततः सगणः निबध्यते तदा कमलानाम वृत्तं स्यादित्यर्थः !

३०। अङ्गेति। यत्र सर्व्वे अङ्गोन्माना अङ्गपरिमिता नवेत्यर्थः, वर्णाः दीर्घा वर्त्तन्ते इति शेषः तद्वृत्तं सर्पेशेन नागराजेन पिङ्गलमुनिना इति यावत्, रूपामालीसंज्ञं

---

২৮। প্রতিপাদে যথাক্রমে একটী করিয়া "র" "ন" ও "ন" গণ মাত্র থাকিলে তাহাকে 'ভদ্রিকা' ছন্দঃ কহে।

২৯। প্রতিপাদে যথাক্রমে যদি দুইটি "ন" গণ ও একটী "স" গণ মাত্র থাকে, তবে তাহাকে 'কমলা' ছন্দঃ কহে।

पङ्क्तिः ( दशाचरावृत्तिः )।

———०———

भ म स ग

२१। 'रुक्मवती' सा यत्र भमस्गाः।

S I I S S S I I S S

कायमनोवाक्यैः परिशुद्धैर्यस्य सदा कंसद्विषि भक्तिः।
राज्यपदे हर्म्यालिरुदारा रुक्मवती विघ्नः खलु तस्य॥

म भ स ग

२२। ज्ञेया 'मत्ता' मभसगसृष्टा।

S S S S I I I I

पीत्वा मत्ता मधु मधुपाली कालिन्दीये तटवनकुञ्जे।
उद्दीव्यन्तीव्रजजनरामाः कामासक्ता मधुजिति चक्रे॥

---

रूपामालीनामकम् उक्तम्। अस्मिन् रूपामालीनामके वृत्ते केषां श्रोतॄणां चेतः उद्वृत्तं अनासक्तं भवेत्? सर्व्व एव रसिकाः श्रोतार इदं वृत्तमाद्रियन्त इति भावः।

२१। रुक्मेति। यत्र भमस्गाः—आदौ भगणस्ततो मगणस्ततः सगणस्ततश्च एको गुरुर्वर्त्तते सा रुक्मवती नाम वृत्तं भवेत्। उदाहरणं—कायेति। यस्य जनस्य परिशुद्धैः निर्म्मलैः कायमनोवाक्यैः करणकैः, कंसं द्विष्टवानिति कंसद्विट् श्रीकृष्णः, तस्मिन् भक्तिः अनुरागविशेषः भवतीति शेषः। तस्य राज्यपदे राज्याधिकारे उदारा उत्कृष्टा रुक्मवती स्वर्णमयी हर्म्म्यालिः प्रासादश्रेणिः, विघ्नः खलु अन्तराय एव। विषयो हि भक्त्या महान् प্রतिबन्धक इति। चम्पकमाला रूपवती च अस्यैव नामान्तरमिति।

---

৩০। যে ছন্দের প্রতিচরণ কেবল দীর্ঘ নয়টী বর্ণে গঠিত হয়, তাহাকে 'রূপামালী' ছন্দঃ কহে।

৩১। প্রতিপাদে যথাক্রমে একটী করিয়া "ভ" "ম" "স" ও "গ" গণ মাত্র থাকিলে তাহাকে 'রুক্মবতী' কহে।

नजनग

२३ । 'त्वरितगति'श्च नजनगैः ।

। । । । ऽ । । । ऽ

(क) त्वरितगतिर्व्रजयुवतिस्तरणिसुताविपिनगता ।
सुररिपुना रतिगुरुणा सह मिलिता प्रमदमिता ॥

(ख) चितिविजितिक्षितिविदितिव्रतरतयः परगतयः ।
उरु रुरुधुर्गुरु दुधुवुर्युधि कुरवः स्वमरिकुलम् ॥

इति दाक्षिणि । ३।८५ ।

---

२२। मत्तेति। मश्च भश्च सश्च गश्च मभसगाः तैः सृष्टा निबद्धा, मत्ता नाम्नी ज्ञेया। पीत्वेति। मधुपाली मधुकरश्रेणिः, कालिन्दी यमुना तस्या इदं कालिन्दीयं तस्मिन्, तटवनकुञ्जे—तटे यद्वनं तत्र यत् कुञ्जं लतामण्डपस्तत्र। "निकुञ्जकुञ्जौ वा क्लीवे लतादिपिहितोदरे।" इत्यमरः। मधु पुष्परसं पीत्वा आस्वाद्य मत्ता व्याकुला सती, उद्घोष्यन्तीः श्रौद्धत्येन क्रीड़न्तीः, व्रजजनरामाः व्रजाङ्गनाः, मधुनामान दैत्यं जितवानिति मधुजित् श्रीकृष्णः तस्मिन्, कामासक्ताः काम-लालाः चक्रे कृतवती। मधुमत्तमधुकरचेष्टावलोकनेन व्रजयुवतीनां कामोद्दीपन-मभूदिति भावः।

२३। त्वरितेति। नश्च जश्च नश्च गश्च नजनगाः तैः घटिता त्वरितगतिर्नाम वृत्तं भवेत्। उदाहरणं—त्वरितेति। त्वरिता शीघ्रा गतिर्गमनं यस्या सा, तरणिः सूर्य्यः तस्य सुता यमुना, तस्या विपिनं गता केलिकाननं प्राप्ता, व्रजयुवतिर्व्रजाङ्गना, रतिगुरुणा रतिपण्डितेन, सुररिपुणा श्रीकृष्णेन सह मिलिता सती, प्रमदं हर्षातिशयं इता प्राप्ता। कुत्रचित् प्रमदमितेत्यत्र परिरमितेति पाठः, तत्र विहारं कारिता इत्यर्थः कर्त्तव्यः।

---

২২। প্রতিপাদে যথা ক্রমে একটী করিয়া 'ম' "ভ" "স" ও "গ" গণ থাকিলে তাহাকে 'মত্তা' ছন্দঃ কহে।

न र ज ग
२४। नरजगैर्भवेन् 'मनोरमा'।
। । । ऽ ऽ । ऽ । ऽ
तरणिजातटे विहारिणी व्रजविलासिनीविलासतः।
मुररिपोस्तनुः पुनातु वः सुकृतशालिनां मनोरमा॥
२५। म्सौ ज्गौ 'शुद्धविरा'ड़िदं मतम्।
२६। म्नौ य्गौ चेति 'पणव' नामेदम्।

---

उदाहरणान्तरं—चितीत्यादि। चितेः धरायाः या विजितिर्विजयः या च स्थितिर्मर्य्यादा तयोर्या विहितिः क्रिया सैव व्रतं तत्र रतिः आसक्तिर्येषां ते, अतएव परा श्रेष्ठा गतिः अवस्था ज्ञानं वा येषां ते कुरवः कुरुसन्तानाः, युधि युद्धे स्वं स्वकीयं अरिकुलं शत्रुगणं उरु अतिमात्रं यथा स्यात् तथा दुदुधुः आहतवन्तः। गुरु अत्यर्थं दुधुवुः कम्पयामासुश्च। अकार इकार उकारश्चेति त्रिभिरेव स्वरैर्विरचितोऽयम् श्लोकः।

२४। नरजेति। नश्च रश्च जश्च गश्च तैः विरचिता मनोरमानाम वृत्तम्भवेत्। यथा—तरणीति। व्रजविलासिन्यो व्रजयुवत्यः तासु विलासतः विलासार्थं तरणिजा-तटे यमुनातीरे विहारिणी विचरणं कुर्व्वती सुकृतशालिनां पुण्यवतां मनोरमा मुररिपोः श्रीकृष्णस्य तनुः मूर्त्तिः वः युष्मान् पुनातु पवित्रीकरोतु।

२५। म्साविति। यत्र मगणः सगणः जगणः गकारश्च वर्त्तते, इदं वृत्तं शुद्ध-विराड् नाम मतम्।

२६। म्नाविति। यत्र मगणः नगणः यगणः गकारश्च वर्त्तते, इदं पणव नाम।

---

৩৩। প্রতিপাদে যথাক্রমে "ন" "জ" "ন" ও "গ" গণ মাত্র থাকিলে তাহাকে 'ত্বরিতগতি' ছন্দঃ কহে।

৩৪। প্রতিপাদে যথাক্রমে "ন" "র" "জ" ও "গ" গণ মাত্র থাকিলে তাহাকে 'মনোরমা' ছন্দঃ কহে।

৩৫। প্রতিপাদে যথাক্রমে "ম" "স" "জ" ও "গ" গণ মাত্র থাকিলে তাহাকে "শুদ্ধবিরাট্" কহে।

३७। रौ जगौ 'मयूरसारिणी' स्यात् ।

३८। तौ जौ गुरुणेय'मुपस्थिता' ।　　इति वृत्तरत्नाकरे ।

३९। 'दीपकमाला' भ्मौ मता जगौ ।

४०। ज्ञेया 'हंसी' मभनगयुता ।　　इति तत्परिशिष्टे ।

---

३७। राविति। यत्र आदौ रगणद्वयं ततो जगणस्ततो गकारश्च वर्त्तते, सा मयूरसारिणी नाम वृत्तं स्यात् ।

३८। त इति। यत्र तगणः जगणद्वयं एको गुरुश्च वर्त्तते, इयं उपस्थिता नाम वृत्तं स्यात् ।

३९। दीपेति। यत्र भगणस्ततो मगणः ततो जगणस्ततो गकारश्च वर्त्तते, सा दीपकमाला नाम वृत्तं भवेत् ।

४०। ज्ञेयेति। यत्र आदौ मगणस्ततो भगणस्ततो नगणस्ततो गकारश्च वर्त्तते, सा हंसीनाम वृत्तं ज्ञेया ।

---

৩৬। প্রতিপাদে যথাক্রমে "ম" "ন" "য" ও "গ" গণ মাত্র থাকিলে 'পণব' ছন্দঃ হইয়া থাকে !

৩৭। প্রতিপাদে যথাক্রমে "র" গণদ্বয় এবং "জ" ও "গ" গণ মাত্র থাকিলে 'ময়ূরসারিণী' ছন্দঃ হইয়া থাকে।

৩৮। প্রতিপাদে যথাক্রমে একটি "ত" গণ দুইটী "জ" গণ ও একটি গুরুবর্ণ থাকিলে 'উপস্থিতা' ছন্দঃ হইয়া থাকে।

৩৯। প্রতিপাদে যথাক্রমে "ভ" "ম" "জ" ও "গ" গণ থাকিলে "দীপকমালা" ছন্দঃ হইয়া থাকে।

৪০। প্রতিপাদে যথাক্রমে "ম" "ভ" "ন" ও "গ" গণ থাকিলে 'হংসী' ছন্দঃ হইয়া থাকে।

## त्रिष्टुप् ( एकादशाक्षरा वृत्तिः )।

त त ज ग ग

**४१। स्या-'दिन्द्रवज्रा' यदि तौ जगौ गः।**

S S I S S I I S I S S

गोष्ठे गिरिं सव्यकरेण धृत्वा रुष्टेन्द्रवज्राहतिमुक्तवृष्टौ।
यो गोकुलं गोपकुलञ्च सुस्थं चक्रे स नो रक्षतु चक्रपाणिः॥

ज त ज ग ग

**४२। 'उपेन्द्रवज्रा' प्रथमे लघौ सा।**

I S I S S I I S I S S

उपेन्द्र वज्रादिमणिच्छटाभि-र्विभूषणानां छुरितं वपुस्ते।
स्मरामि गोपीभिरुपास्यमानं सुरद्रुमूले मणिमण्डपस्थम्॥

---

४१। स्यादिति। यदि तौ—तगणद्वयं ततो जगणस्तत एको गुरुस्ततोऽपि एको गुरुर्वर्त्तते, तदा इन्द्रवज्रा नाम वृत्तं स्यात्।

गोष्ठ इति। चक्रं पाणौ यस्य सः ( प्रहरणार्थेभ्यः परे निष्ठासप्तम्याविति पाणि-शब्दस्य परनिपातः ) चक्रपाणिः यः श्रीकृष्णः, रुष्टः पूजोपकरणभक्षणात् कुपितः य इन्द्रः तेन वज्राहत्या वज्राघातेन वज्रक्षेपणपूर्व्वकमित्यर्थः, मुक्ता विहिता वृष्टिर्वर्षणं यस्मिन् तस्मिन् गोष्ठे सव्यकरेण वामहस्तेन गिरिं गोवर्द्धनाख्यं पर्व्वतं धृत्वा गोकुलं गोयूथं गोपकुलं गोपगणञ्च सुस्थं निरापत् चक्रे, स चक्रपाणिः नः अस्मान् रक्षतु। पुरा किल गोपाः प्रतिवत्सरं वृष्टिकामनया इन्द्रोत्सवं विदधुः। एकदा ते श्रीकृष्णवचनानु-रोधेन तमकृत्वा गोवर्द्धनयात्रां कुर्व्वन्ति स्म। ततोऽतिक्रुद्धः शक्रः सप्त दिनानि सवज्र-पातमतिवर्षितुमारेभे, श्रीकृष्णश्च तामवस्थामवलोक्य वामकरकनिष्ठाङ्गुल्यग्रभागेण गोवर्द्धनं धृत्वा गोगणं गोपगणञ्च ररक्षेति पुराणवार्त्ता। अत्र पदार्थहेतुकं काव्यलिङ्गमलङ्कारः।

---

৪১। যদি শ্লোকের প্রতিপাদে যথাক্রমে দুইটী "ত" গণ, একটী "জ" গণ ও ও দুইটী "গ" গণ থাকে, তবে 'ইন্দ্রবজ্রা' ছন্দঃ হয়।

४३ । अनन्तरोदीरितलक्ष्मभाजौ
पादौ यदीया'वुपजातय'स्ता: ।
इत्थं किलान्यास्वपि मिश्रितासु
वदन्ति जातिष्विदमेव नाम ॥

---

४२ । उपेति । प्रथमे आद्ये वर्णे लघौ सति सा इन्द्रवज्रा एव उपेन्द्रवज्रा नाम भवेदित्यर्थ: । यथा—उपेन्द्रेति । हे उपेन्द्र ! श्रीकृष्ण ! "उपेन्द्र इन्द्रावरज" इत्यमर: । सुरद्रुमूले देवदारुतले मणिमण्डपस्थं मणिखचितो यो मण्डप: मन्दिरं तत्र तिष्ठतीति तथोक्तं, विभूषणानां अलङ्काराणां वज्रादिमणिच्छटाभि: हीरकादिमणिद्युतिभि: स्फुरितं रञ्जितं गोपीभि: गोपयुवतिभिरुपास्यमानं सेव्यमानं ते तव वपु: कलेवरं स्मरामि चिन्तयामि ।

४३ । अनन्तरेति । यदीयौ यत्सम्बन्धिनौ पादौ चरणौ अनन्तरोदीरितयो: पूर्व्वकथितयो: इन्द्रवज्रोपेन्द्रवज्रयो: लक्ष्मभाजौ लक्षणान्वितौ, ता उपजातय: उपजाति-नामानि वृत्तानि भवेयु: । अन्यासु इत्थं मिश्रितासु उभयलक्षणान्वितासु जातिषु वृत्तिषु अपि इदमेव नाम उपजातिरेव संज्ञेति वदन्ति कथयन्ति किल कवय: । सर्वास्वपि संकीर्णासु एका उपजातिरेव नाम, न तु नानारूपत्वात् नानाविधं नामेति ।

---

৪২। যে ছন্দের ইন্দ্রবজ্রার সহিত কেবল চরণের প্রথম অক্ষর লঘু বলিয়া বৈসাদৃশ্য ঘটিবে, তাহাকে 'উপেন্দ্রবজ্রা' কহে। অর্থাৎ প্রতিপাদে যথাক্রমে "জ" "ত" "জ" ও দুইটী "গ" গণ থাকিলে, তাহাকে 'উপেন্দ্রবজ্রা' কহে।

৪৩। যে পদ্যের পাদদ্বয় পূর্ব্বোক্ত ইন্দ্রবজ্রা ও উপেন্দ্রবজ্রার লক্ষণ-সমন্বিত হইবে, তাহাকে উপজাতি ছন্দঃ বলে। এইরূপ উভয়লক্ষণসমন্বিত অন্যান্য মিশ্রিত ছন্দঃস্থলেও 'উপজাতি' ই হয়। ( অর্থাৎ একই পদ্যে পাদভেদে পৃথক্ ছন্দোনিয়মসত্ত্বে উপজাতি হয় )।

यथा ममाच्युतचरिते—

काचिन्मुरारेर्वदनारविन्दं संक्रान्तमालोक्य जले नवोढ़ा ।
व्यक्तं सलज्जा परिचुम्बितं तत् तदर्थमेवाम्भसि निर्ममज्ज ॥ क ॥
मुखारविन्दैर्व्रजसुन्दरीणामामोदमत्युत्कटमुद्गिरद्भिः ।
अहारि चित्तेन समं मुरारेर्हैमाम्बुजेभ्योऽपि मधुव्रतौघः ॥ ख ॥
तोयेषु तस्याः प्रतिबिम्बितासु व्रजाङ्गनानां नयनावलीषु ।
स्ववन्धुपङ्क्तिभ्रमतोऽतिमुग्धा गोष्ठीं प्रफर्य्यो रचयाम्बभूवुः ॥ ग ॥

---

उदाहरणं—काचिदित्यादि । काचित् अनिर्दिष्टा नवोढ़ा अचिरपरिणीता रमणी, नवोढ़ेत्यनेन समधिकलज्जाशालिनीति सूचितं, मुरारेः श्रीकृष्णस्य यमुनातीरस्थितस्येत्यर्थः । वदनारविन्दं मुखकमलं जले संक्रान्तं प्रतिबिम्बितं आलोक्य तत् प्रतिबिम्बितं श्रीकृष्णवदनारविन्दं व्यक्तं प्रकाशं परिचुम्बितुं सलज्जा लज्जिता सती लज्जावशात् समचं चुम्बितुमपारयन्तीति भावः । तदर्थमेव चुम्बनार्थमेव अम्भसि सलिले निर्ममज्ज निमग्नवती । अत्र प्रथमतः पादत्रयं इन्द्रवज्रालक्षणाक्रान्तं चतुर्थस्तु पाद उपेन्द्रवज्रालक्षणान्वित इति इन्द्रवज्रोपेन्द्रवज्रयोः साङ्कर्य्यादुपजातिरियम् । अलङ्कारोऽत्रातिशयोक्तिः ॥ क ॥

अन्यच्च, मुखारविन्दैरिति । अत्युत्कटं अत्यधिकं आमोदं सौगन्धं उद्गिरद्भिः विकिरद्भिः व्रजसुन्दरीणां व्रजरमणीनां मुखारविन्दैः मुखकमलैः हैमाम्बुजेभ्यः स्वर्णकमलेभ्यः अपि मधुव्रतौघः अलिकुलं मुरारेः चित्तेन मनसा समं सह अहारि आकृष्टः । व्रजयुवतीनां वदनारविन्दैर्यथा सौरभमन्विष्यन्तो मधुकरा आकृष्टास्तथा मुरहरमानसमपि आकृष्टमिति । अत्र मुखारविन्दैरिति रूपकम् । हैमाम्बुजेभ्यः मुखारविन्दानामाधिक्यवर्णनात् व्यतिरेकश्चालङ्कारः । अत्र प्रथमस्तृतीयश्च पाद उपेन्द्रवज्राया द्वितीयश्चतुर्थश्च पाद इन्द्रवज्राया लक्षणं लभत इति साङ्कर्य्यादुपजातिर्नाम वृत्तम् ॥ ख ॥

तोयेष्विति । अतिमुग्धा अतिमनोरमा अतिमूढ़ाश्च "मुग्धस्तु सुन्दरे मूढ़े" इति कोषः । प्रफर्य्यः प्रोष्ठ्यः मत्स्यविशेषाः । "प्रोष्ठी तु शफरी द्वयोः" इत्यमरः । तस्याः

तथा ममैव गोपालशतके—

वनेषु कृत्वा सुरभिप्रचारं प्रकाममुग्धो मधुवासरेषु ।
गायन् कलं क्रीड़ति पद्मिनीषु मधूनि पीत्वा मधुसूदनोऽसौ ॥ घ ॥

एवमनयोर्नानाविधा अप्युपजातयो बोद्धव्याः । तथा वंशस्थविलेन्द्रवंशयोरित्यमुदाहार्य्यम् ।—

इत्थं रथाश्वेभनिषादिनां प्रगे गणो नृपाणामथ तोरणाद्बहिः ।
प्रस्थानकालक्षमवेशकल्पनाकृतक्षणक्षेपमुदैक्षताच्युतम् ॥

इति माघे ।

---

यमुनायाः तोयेषु सलिलेषु । "अम्भोऽर्णस्तोयपानीयम्" इत्यमरः । प्रतिबिम्बितासु नयनावलीषु लोचनपङ्क्तिषु स्वं पङ्क्तिभ्रमतः सजातीयसमूहभ्रमात् गोष्ठीं सभां रचयाम्बभूवुः । बहवः शफर्य्यस्तत्र मिलिता इत्यर्थः । यमुनाजलान्तराले एकतः व्रजाङ्गनानां नयनानि प्रतिबिम्बितानि, अन्यतः शफरीकुलानि मिलितानि बभूवुरिति । अत्र प्रथमचतुर्थौ इन्द्रवज्राया द्वितीयतृतीयौ तु उपेन्द्रवज्राया इति साङ्कर्य्यादुपजातिः । अलङ्कारश्चात्र भ्रान्तिमानिति ॥ ग ॥

वनेष्विति । प्रकाममुग्धः अत्यन्तं मुग्धः असौ मधुसूदनः श्रीकृष्णः, मधुकरश्च । "मधुसूदनस्तु पुंसि भ्रमरे कंसविद्विषि" इति कोषः । मधुर्वसन्तः । "मधुर्दैत्ये मधुश्चैत्रे वसन्ते मधुरुच्यते ।" इति कोषः । तस्य वासरेषु दिवसेषु, वनेषु काननेषु सलिलेषु च सुरभिप्रचारं गोचारणं, पक्षान्तरे सुरभेः वसन्तस्य, ऋतुराजस्य प्रचारं वार्त्तां प्रकाशञ्च कृत्वा मधूनि एकत्र पुष्परसान् अन्यत्र अधरामृतानि च पीत्वा, कलं मधुरं गायन् पद्मिनीषु तदाख्यनायिकाविशेषेषु सरोजिनीषु च क्रीड़ति विहरति । "सुरभिर्गवि गन्धे च वसन्ते च मनोरमे" इति मेदिनी । 'पद्मिनी पद्मसङ्घाते स्त्रीविशेषे च कथ्यते ।' इति कोषः । अत्र प्रथमद्वितीयचतुर्थाः पादा इन्द्रवज्रायास्तृतीयस्तु उपेन्द्रवज्राया इति साङ्कर्य्यादुपजातिः । अलङ्कारश्च श्लेष इति ॥ घ ॥

इत्थमिति । इत्थं एवम्विधे पूर्व्वोक्ते प्रगे प्रातःसमये । "सायं साये प्रगे प्रातरि" इत्यमरः । अथ सूर्य्योदयानन्तरं रथाश्च अश्वाश्च इभाश्च रथाश्वेभं तस्मिन् निषीदन्तीति

न ज ज ल ग

४४। नजजलगैर्गदिता 'सुमुखी'।

। । । । ऽ । । ऽ । । । ऽ

तरणिसुतातटकुञ्जगृहे वदनविधुस्मितदीधितिभिः।
तिमिरमुदस्य वृतं सुमुखी हरिमवलोक्य जहास चिरम्॥

---

रथाश्वेभनिषादिनः, तेषां रथिनां अश्वारोहिणां हस्त्यारोहिणाञ्च नृपाणां राज्ञां गणः तोरणात् वहिर्द्वारात्। "तोरणोऽस्त्री वहिर्द्वार" मित्यमरः। वहिः वाह्यप्रदेशे प्रस्थान-काले यात्रासमयं चम उचितः यो वेशः नेपथ्यं। 'आकल्पवेशौ नेपथ्य'मित्यमरः। तस्य कल्पनया अनुष्ठानेन कृतः चणक्षेपः समयविलम्बो येन तमच्युतं श्रीकृष्णं उदैक्षत प्रतीक्षितवान्। अत्र पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। श्लोकेऽस्मिन् प्रथमतृतीयपादयो-रिन्द्रवंशालक्षणं द्वितीयचतुर्थयोस्तु वंशस्थलक्षणमिति साङ्कर्य्यादुपजातिभेदः॥ ७॥

४४। नजजेति। नगणजगणजगणैरेकेन लघुना एकेन गुरुणा च सुमुखी तन्नाम वृत्तं गदिता उक्ता।

उदाहरणं—तरणीति। सुमुखी, काचित् सुवदना गोपीत्यर्थः, तरणिसुता यमुना तस्याः तटे तत् कुञ्जगृहं लतामण्डपः तस्मिन्। हरिं श्रीकृष्णं वदनं मुख-मेव विधुश्चन्द्रस्तस्य स्मितानि ईषद्धासा एव दीधितयः किरणाः ताभिः तिमिरं कुञ्ज-गृहान्धकारं उदस्य दूरीकृत्य वृतं गुप्तं अलक्षितभावेन स्थितम् इत्यर्थः, अवलोक्य चिरं जहास हसितवती। तिमिरसमाच्छन्नं कुञ्जगृहमभिस्थितं मां व्रजाङ्गना विलोकयितुं नार्हतीति श्रीकृष्णः कुञ्जगृहे गुप्तमतिष्ठत्, व्रजाङ्गना तमन्विष्य धृत्वा च शठस्त्वं धृतो ऽसीति जहास। क्वचित् पुस्तके 'मुखं सुमुखा हरिमवलोक्य चुचुम्ब चिर'मिति पाठो दृश्यते; तत्र एवं व्याख्या—तरणिसुता तटकुञ्जगृहे स्थिता इति शेषः, सुमुखी काचित्

---

४४। প্রতিপাদে যথাক্রমে "ন" "জ" "জ" "ল" ও 'গ' গণ থাকিলে তাহাকে 'সুমুখী' ছন্দঃ কহে।

म त त ग ग

४५ । मात्तौ गौ चे-'च्छालिनी' वेदलोकैः ।

ऽ ऽ ऽ ऽ ऽ। ऽ ऽ । । ऽ

अंहो हन्ति ज्ञानवृद्धिं विधत्ते धर्म्मं धत्ते काममर्थञ्च सूते ।
मुक्तिं दत्ते सर्व्वदोपास्यमाना पुंसां श्रद्धाशालिनी विष्णुभक्तिः ॥

---

सुवदना गोपी हरिमवलोक्य वदनविधुस्मितदीधितिभिः मुखचन्द्रस्य ईषद्धास्यरूपैः किरणैः तिमिरमन्धकारं उदस्य विनाश्य मुखं हरेरिति शेषः, चिरं चुचुम्ब । हास-किरणेन तिमिरापगमात् व्यक्तं हरिमुखं चुम्बितवतीति । रूपकमतिशयोक्तिश्च अलङ्कारौ ।

४५ । मात्ताविति ।—चेत् यदि मात् मगणात् परं तौ तगणौ, गौ द्वौ वर्णावपि गुरू वर्त्तेते तदा शालिनीनाम वृत्तं स्यात् । अत्र वेदैश्चतुर्भिः लोकैः सप्तभिश्च अक्षरैर्यतिः कर्त्तव्या ।

उदाहरणं—अंहो इति । श्रद्धाशालिनी विश्वासवती विष्णुभक्तिः श्रीकृष्णेऽनुरागः, सर्व्वदा उपास्यमाना सती, पुंसां नराणां अंहः पापम् । "कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम्" इत्यमरः । हन्ति विनाशयति । ज्ञानवृद्धिं विवेकोन्नतिं विधत्ते करोति । धर्म्मं पुण्यं धत्ते जनयति । कामं अभिलाषं अर्थं धनञ्च सूते उत्पादयति । मुक्तिं मोक्षं दत्ते ददाति सर्व्वप्रदा विष्णुभक्तिरवश्यमेव कर्त्तव्येति भावः । 'अथ कारकमेकं स्यादनेकासु क्रियासु चे'दिति लक्षणादत्र दीपकालङ्कारः ।

---

৪৫। যে ছন্দে প্রতিপাদে যথাক্রমে "ম", দুইটী "ত" ও দুইটী "গ" গণ মাত্র থাকে এবং প্রথমতঃ চারি অক্ষরে পরে সপ্তাক্ষরে যতি থাকে, তাহাকে 'শালিনী' কহে।

म भ त ग ग

४६। 'वातोर्म्मीयं' गदिता म्भौ तगौ गः।

S S S S । । S S । S S

ध्याता मूर्त्तिः क्षणमप्यच्युतस्य श्रेणी नाम्नां गदिता हेलयापि।
संसारेऽस्मिन् दुरितं हन्ति पुंसां वातोर्म्मी पोतमिवाम्भोधिमध्ये॥

म ग न न ग

४७। मो गो नौ गो 'भ्रमरविलसिता'। *

S S S S । । । । । । S

मुग्धे मानं परिहर न चिरात् तारुण्यं ते सफलयतु हरिः।
फुल्ला वल्ली भ्रमरविलसिता भावि शोभां कलयति किमु ताम्॥

---

४६। वातोर्म्मीति। यस्याः पादे आदौ मगणस्ततो भगणस्तदनुतगनः तत्परमेको गुरुः पुनरपि एको गुरुर्वर्त्तते, इयं वातोर्म्मी नाम वृत्तं गदिता उक्ता।

उदाहरणं—ध्यातेति। अच्युतस्य श्रीकृष्णस्य मूर्त्तिः प्रतिकृतिः क्षणमपि कालं ध्याता चिन्तिता सती, नाम्नां श्रेणिः श्रीकृष्णहरिविष्णुनारायणप्रभृतिवाचकानां समूहः हेलया अनिच्छयापि गदिता कीर्त्तिता सती, अस्मिन् संसारे पुंसां मानवानां दुरितं पापं, वातोर्म्मी पवनजनिततरङ्गः अम्भोधिमध्ये समुद्रमध्ये पोतं यानम् इव हन्ति विनाशयति। "यानमात्रे स्त्रियौ पोत" इत्यमरः.

४७। मो ग इति—यत्र आदौ मगणः, तदनु एको गुरुः. तदनु नगणद्वयं ततश्च एको गुरुर्वर्त्तते, सा भ्रमरविलसिता नाम। यथा—मुग्धे इति। मुग्धे! मानं परिहर

---

४৬। যে ছন্দে প্রতিপাদে যথাক্রমে "ম" "ভ" "ত" ও দুইটী "গ" গণ থাকে, তাহাকে 'বাতোর্ম্মী' ছন্দঃ কহে।

* 'भ्रमरविलसितं' क्वापि।

भ त न ग ग

४८ । स्या-'दनुकूला' भतनगगाश्चेत् ।

ऽ।।ऽऽ ।।।।ऽऽ

वल्लववेशा मुररिपुमूर्त्ति-र्गोपमृगाक्षीकृतरतिपूर्त्तिः ।
वाञ्छितसिद्धौ प्रणतिपरस्य स्यादनुकूला जगति न कस्य ॥

---

मुग्धे । हरिः श्रीकृष्णः ते तव तारुण्यं यौवनं न चिरात् अचिरात् सफलयतु चरितार्थं करोतु । 'तारुण्यं यौवनं समे' इत्यमरः । अन्यथा यौवनं विफलमेवेत्याह—फुल्लेति । फुल्ला विकसिता वल्ली लता । 'वल्ली तु व्रततिर्लते'त्यमरः । भ्रमरविलसितानां मधुकरक्रीड़ानां अभावे तां तद्रूपां शोभां कलयति धत्ते किं ? दृष्टान्तोऽयमलङ्कारः ।

४८ । स्यादिति ।—चेत् यदि भगणतगणनगणाः स्युः तदनु च गुरुद्वयं स्यात्, तदा 'अनुकूला'नाम वृत्तं स्यात् । यथा—वल्लेति ।—वल्लवस्य गोपस्य वेश इव वेशो नेपथ्यं यस्याः सा । 'आकल्पवेशौ नेपथ्य'मित्यमरः । गोपमृगाक्षीभिर्गोपरमणीभिः कृता सम्पादिता रतिपूर्त्तिः रागातिशयः यस्याः रमणातिशयो वा यया सा, मुररिपोः श्रीकृष्णस्य मूर्त्तिः तनुः, जगति ब्रह्माण्डे प्रणतिपरस्य प्रणतस्य कस्य जनस्य वाञ्छितसिद्धौ अभीष्टपूरणाय अनुकूला सहाया न स्यात्, सर्व्वेषामेव प्रणतानामभीष्टं पूरयति श्रीकृष्ण इति भावः ।

---

৪৭। যে ছন্দে প্রতিপাদে যথাক্রমে "ম" "গ" এবং দুইটী "ন" ও একটী 'গ' গণ থাকে, তাহাকে 'ভ্রমরবিলসিতা' বা 'ভ্রমরবিলসিত' ছন্দঃ কহে।

৪৮। প্রতিপাদে যথাক্রমে "ভ" 'ত" "ন" ও দুইটী 'গ' গণ থাকিলে 'অনুকূলা' ছন্দঃ হয়।

र न र ल ग

४९ । रात् परैर्नरलगै 'रथोद्धता' ।

S I S I I I S I S I S

राधिका दधिविलोड़नस्थिता कृष्णवेणुनिनदैरथोद्धता ।
यामुनं तटनिकुञ्जमञ्जसा सा जगाम सलिलाहृतिच्छलात् ॥

र न भ ग ग

५० । 'स्वागता' रनभगैर्गुरुणा च ।

S I S I I I S I I S S

यस्य चेतसि सदा मुरवैरी वल्लवीजनविलासविलोलः ।
तस्य नूनममरालयभाजः स्वागतादरकरः सुरराजः ॥

---

४९ । रात्परैरिति ।—रात् रगणात् परैः परस्थितैर्नरलगैः नश्च रश्च लश्च गश्च तैः वर्णैर्विरचिता रथोद्धतानाम वृत्तं स्यात्, । यथा—राधिकेति । दधिविलोड़ने दधिमन्थनकर्मणि स्थिता सा राधिका कृष्णवेणुनिनदैः श्रीकृष्णवादितवंशीध्वनिभिः उद्धता व्याकुला सती अथ दधिमन्थनानन्तरं सलिलाहृतिच्छलात् जलानयनच्छलेन अञ्जसा झटिति यामुनं यमुनासम्बन्धि तटनिकुञ्जं तीरवर्त्तिलतामण्डपं जगाम । अत्रालङ्कारः काव्यलिङ्गमपह्नुतिश्च ।

५० । स्वागतेति ।—रनभगैर्गुरुणा च वर्णैन घटिता स्वागतानाम वृत्तं भवेत् । यथा—यस्येति । वल्लवीजनेषु गोपयुवतीषु विलासी क्रीड़ायां विलोलो व्यापृतः मुरवैरी श्रीकृष्णः यस्य चेतसि सदा अस्तीति शेषः । सुरराजः देवेन्द्रोऽपि अमरालयभाजः अमरालयं स्वर्गं भजते यः सः अमरालयभाक् तस्य स्वर्गगतस्य तस्य स्वागतेन "भवान् सुखेन आगतः ?" इति प्रश्नेन आदरं करोतीति आदरकरः नूनं ध्रुवं भवेदित्यर्थः । श्रीकृष्णध्यानपरायणो जनः स्वर्गं गच्छन् इन्द्रेण समाद्रियते इति । अलङ्कारः काव्यलिङ्गम् ।

---

৪৯ । প্রতিপাদে যথাক্রমে "র" "ন" "র" "ল" ও "গ" গণ মাত্র থাকিলে 'রথোদ্ধতা' ছন্দঃ হয় ।

भ भ भ ग ग

५१। 'दोधक' मिच्छति भत्रितयाद्‌ गौ।

S I I S I I S I I S I

देव सदोध कदम्बतलस्थ श्रीधर तावकनामपदं मे।
कण्ठतलेऽसुविनिर्गमकाले स्वल्पमपि क्षणमेष्यति योगम्॥

त ज ज ल ग

५२। स्यात् 'मोटनकं' तजजाश्च लगौ।

S S I I S I I S I I I

रङ्गे खलु मल्लकलाकुशल-श्चाणूरमहाभटमोटनकम्।
यः केलिलवेन चकार स मे संसाररिपुं परिमोटयतु॥

---

५१। भत्रितयात् भगणत्रयात् परं गौ गुरुद्वयं यदि वर्त्तेते, तदा दोधकं नाम वृत्तं भवेत्। उदाहरणं—देवेति। हे देव! दोधेन वत्सेन सह वर्त्तमानः सदोधः। "वत्सः शक्रतकरिर्दोग्धा दोधकौ दोध इत्यपी"ति कोषः। तत्सम्बोधने हे सदोध। हे कदम्बतलस्थ! हे श्रीधर! तावकनामपदं त्वदीयं कृष्ण इति नाम असुविनिर्गमनकाले प्राणवियोगसमये मे मम कण्ठतले स्वल्पं क्षणमपि योगं सम्बन्धं उच्चारणजनितमित्यर्थः। एष्यति प्राप्स्यति। अन्तकाले मम मुखात् श्रीकृष्णनामोच्चारणं भविष्यतीति।

५२। स्यादिति—तश्च जश्च जश्च तजजाः एवं लगौ च यत्र वर्त्तन्ते तत् मोटनकं नाम वृत्तं स्यात्। उदाहरणं—रङ्ग इति। रजत्यस्मिन्निति रङ्गः तस्मिन् रणक्षेत्रे इत्यर्थः। मल्लकलाकुशलः बाहुयुद्धनिपुणः यः श्रीकृष्णः महांश्चासौ भटश्चेति महाभटः चाणूराख्यो यो महाभटः महायोद्धा। "भटा योधाश्च योद्धारः" इत्यमरः। तस्य

---

१०। प्रतिपादে যথাক্রমে "র" "ন" "ভ" ও দুইটী "গ" গণ মাত্র থাকিলে 'স্বাগতা' ছন্দঃ হয়।

৫১। প্রতিপাদে যথাক্রমে তিনটী 'ভ" গণ ও দুইটী "গ" গণ থাকিলে তাহা 'দোধক' ছন্দঃ বলিয়া কথিত হয়।

र ज र ज ग

५३। 'श्येनी'दीरिता रजौ रलौ गुरुः ।

ऽ। ऽ ।ऽ।ऽ।ऽ।ऽ

यस्य कीर्त्तिरिन्दुकुन्दचन्दनश्येन्यशेषलोकपावनी सदा ।

जाह्नवीव विश्ववन्द्यविभ्रमा तं भजामि भावगम्यमच्युतम् ॥

५४। ननसगगुरुरचिता 'वृत्ता' ।

---

मोटनस्य विनाशं चकार, सः श्रीकृष्णः, मे मम संसारः स्वादृष्टोपनिबद्धशरीरपरिग्रहः, स एव रिपुः शत्रुः तं परिमोटयतु विनाशयतु । चौरादिकात् परिपूर्वकात् मुटधातोर्णिच् । अलङ्कारोऽत्र रूपकम् ।

५३। श्येनीति।—रजरलगैर्गणैर्घटिता श्येनी नाम वृत्तं उदीरिता कथिता । उदाहरणं—यस्येति।—यस्य श्रीकृष्णस्य कीर्त्तिः जाह्नवीव गङ्गेव, इन्दुचन्द्रः, कुन्दं तदाख्यं, चन्दनञ्च, तद्वत् श्येनी शुक्लवर्णा । 'श्येतैतहरितलोहितेभ्यस्तो न' इति स्त्रियां ईप्रत्यये श्येतशब्दात् तकारस्य नकारः । सदा अशेषलोकपावनी त्रिभुवनपवित्रताविधायिनी,विश्वैः समस्तैः देवदानवमनुष्यादिभिः वन्द्यः पूजनीयः विभ्रमः विलासः यस्याः तादृशी । यथा—गङ्गा चन्द्रादिवत् धवला त्रिलोकपावनी विश्ववन्द्यविभ्रमा च ; तस्य कीर्त्तिरपि तथा वर्त्तते । तं भावगम्यं भावः अनुरागः भक्तिरिति यावत्, तेन गम्यं लभ्यं अच्युतं श्रीकृष्णं भजामि सेवे । उपमालङ्कारः ।

५४। ननसेति। यत्र प्रथमतः नगणद्वयं ततः सगणः ततश्च गुरुद्वयं निबध्नते सा वृत्ता नाम वृत्तं भवति ।

---

৫২। প্রতিপাদে যথাক্রমে একটী "ত" গণ ও দুইটী "জ" গণ এবং একটী 'ল" ও "গ" গণ থাকিলে 'মোটনক' ছন্দঃ হয়।

৫৩। যে ছন্দে প্রতিপাদে যথাক্রমে "র" 'জ" 'র" "ল" ও "গ" গণ থাকে, তাহা 'শ্যেনী' ছন্দঃ বলিয়া কথিত হয়।

৫৪। যে ছন্দে প্রতিপাদে যথাক্রমে দুইটী "ন" গণ একটী "স" গণ ও পরে দুইটী গুরুবর্ণ থাকে, তাহা 'বৃত্তা' নামে কথিত হয়।

५५। ननरलगुरुभिश्च "भद्रिका"।

५६। "उपस्थित"मिदं ज्सौ ताद् गकारौ।

५७। "शिखण्डित"मिदं ज्सौ त्गौ गुरुश्चेत्।

५८। "उपचित्र" मिदं सससाल्लगौ।

---

५५। ननरेति।—यत्र प्रथमतो नगणद्वयं तदनु रगणः तदनु एको लघुः तदनु च एको गुरुः निबध्यते, सा भद्रिका नाम वृत्तम्।

५६। उपस्थितेति।—यदि आदौ जगणस्ततः सगणः ततः तगणः ततो गुरुद्वयं तत् उपस्थितं नाम वृत्तम्।

५७। शिखण्डितेति।—यत्र प्रथमतो जगणः ततः सगणः ततः तगणः ततो गुरुद्वयं निबध्यते, तत् शिखण्डितं नाम वृत्तम्। उपस्थिताख्यच्छन्दस एव मतान्तरे शिखण्डिताख्यत्वमिति एकगणवत्त्वेऽपि दोषाभावः।

५८। उपचित्रेति। यत्र सगणत्रयानन्तरं एको लघुः एकश्च गुरुः इदं उपचित्रं नाम वृत्तम्।

---

৫৫। যে ছন্দে ক্রমশঃ দুইটী "ন" একটী "র" ও "ল" গণ তৎপর একটী গুরুবর্ণ থাকে, তাহাকে 'ভদ্রিকা' কহে।

৫৬। যে ছন্দে ক্রমশঃ "জ" "স" "ত" ও দুইটী "গ" গণ থাকে, তাহাকে "উপস্থিত" বৃত্ত কহে।

৫৭। যে ছন্দে ক্রমশঃ "জ" "স" "ত" ও দুইটী "গ" গণ থাকে, তাহাকে 'শিখণ্ডিত' বৃত্ত কহে। (ইহাই মতান্তরে উপস্থিত বৃত্ত, কারণ উভয়েরই গণ একবিধ।)

৫৮। যে ছন্দে ক্রমশঃ তিনটী "স" একটী "ল" ও 'গ" গণ মাত্র থাকে, তাহা 'উপচিত্র' নামে কথিত হয়।

४—ছ

५८। "कुपुरुषजनिता" ननौ गौं गः।

६०। अनवसिता न्यौ भ्गौ गुरुरन्ते।

इति वृत्तरत्नाकरे।

६१। "विध्वङ्कमाला" भवेत्तौ तगौ गः।

६२। 'सान्द्रपदं' स्याद् भतनगलैश्च ॥

इति कुत्रचित् पुस्तके।

---

५९। कुपुरुषेति।—यत्र प्रथमतो नगणद्वयं ततो रगणः ततो गुरुद्वयं सा कुपुरुषजनिता नाम वृत्तम्।

६०। अनवसितेति।—यत्र आदौ नगणस्तदनु यगणस्तदनु भगणस्तदनु च गुरुद्वयं वर्त्तते, सा अनवसिता नाम वृत्तम्।

६१। विध्वङ्कमालेति।—यदि तगणत्रयानन्तरं गुरुद्वयं स्यात्, तदा विध्वङ्कमाला नाम वृत्तम्।

६२। सान्द्रेति।—यदि भगणतगणनगणानन्तरं एको गुरुः एकश्च लघुर्वर्त्तते, तदा सान्द्रपदं नाम वृत्तं स्यात्।

---

৫৯। যে ছন্দে ক্রমশঃ দুইটী "ন" একটী "র" ও দুইটী "গ" গণ মাত্র থাকে, তাহাকে 'কুপুরুষজনিতা' কহে।

৬০। যে ছন্দে ক্রমশঃ "ন" "য" "ভ" ও দুইটী গুরুবর্ণ মাত্র থাকে, তাহা 'অনবসিতা' নামে কথিত হয়।

৬১। যে ছন্দে ক্রমশঃ তিনটী "ত" ও দুইটী "গ" গণ মাত্র থাকে, তাহাকে 'বিধ্বঙ্কমালা' কহে।

৬২। যে ছন্দে ক্রমশঃ "ভ" "ত" "ন" "গ" ও "ল" গণ মাত্র থাকে, তাহা "সান্দ্রপদ" নামক ছন্দঃ হয়।

६३ । रैणा जैन सैन लगयो "द्रुता" ।

६४ । नररलैर्गुरा-"विन्दिरा" मता ।

'जयति तेऽधिकं जन्मना व्रज' इति भागवतम् । १०।३१।१ ।

इति तत्परिशिष्टे ।

जगती ( द्वादशाक्षरा वृत्तिः ) ।

र न भ स

६५ । "चन्द्रवर्त्म" निगदन्ति रनभसैः ।

S I S I I I S I I I I S

चन्द्रवर्त्म पिहितं घनतिमिरैराजवर्त्म रहितं जनगमनैः ।

इष्टवर्त्म तदलङ्कुरु सरसे कुञ्जवर्त्मनि हरिस्तव कुतुकी ॥

---

६३ । रैणेति ।—रगणात् जगणात् सगणाच्च परं यदि एको लघुः एकश्च गुरुः स्यात्, तदा द्रुता नाम वृत्तम् ।

६४ । नररेति ।—नगणात् रगणद्वयाच्च परं यदि एको लघुः एकश्च गुरुः स्यात्, तदा इन्दिरा नाम । उदाहरणं—जयति तेऽधिकमित्यादि । भागवतीयः श्लोकः ।

६५ । चन्द्रवर्त्मेति ।—रनभसैर्गणैर्निबद्धं चन्द्रवर्त्म नाम वृत्तम्भवति । चन्द्रेति ।—हे सरसे ! हे रसिके ! कस्याश्चित् गोपाङ्गनायाः सम्बोधनमिदम् । घनतिमिरैः निविडान्धकारैः अथवा मेघजनिततमोभिः चन्द्रवर्त्म नभोमण्डलं पिहितम् आच्छादितम् । अपिपूर्व्वकधाधातोः कर्म्मणि क्तः । अपेरकारलोपः । "अपिधान-तिरोधानपिधानच्छादनानि च ।" इत्यमरः । राजवर्त्म राजमार्गः जनगमनैः रहितं

---

৬৩ । যে ছন্দে ক্রমশঃ "র" "জ" "স" গণ, পরে একটী লঘু ও তৎপরে একটী গুরু বর্ণ মাত্র থাকে, তাহাকে 'দ্রুতা' বৃত্ত কহে ।

৬৪ । যে ছন্দ ক্রমশঃ একটী "ন" দুইটী "র" একটী "ল" গণ ও একটী গুরুবর্ণ থাকে, তাহা 'ইন্দিরা' নামে কথিত হয় ।

৬৫ । যে ছন্দে ক্রমশঃ "র" "ন" "ভ" ও "স" গণ মাত্র থাকে, তাহাকে 'চন্দ্রবর্ত্ম' ছন্দঃ কহে ।

ज त ज र

६६। वदन्ति "वंशस्थविलं" जतौ जरौ।

। ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

विलासवंशस्थविलं मुखानिलैः प्रपूर्य्य यः पञ्चमरागमुद्गिरन्।
व्रजाङ्गनानामपि गानशालिनां जहार मानं स हरिः पुनातु नः॥

त त ज र

६७। "तच्चेन्द्रवंशा" प्रथमाक्षरे गुरौ।

ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

दैत्येन्द्रवंशाग्निरुदीर्ण-दीधितिः पीताम्बरोऽसौ जगतां तमोऽपहः।
यस्मिन् ममज्जुः शलभा इव स्वयं ते कंसचाणूरमुखा मखद्विषः॥

---

त्यक्तं राजवर्त्म जनशून्यमित्यर्थः। तत् तस्मात् त्वं इष्टवर्त्म अभीप्सितं पन्थानं अलङ्कुरु साङ्केतिकस्थानं व्रज इत्यर्थः। हरिः श्रीकृष्णः तव कुञ्जवर्त्मनि कुञ्जगमनमार्गे कुतुकी उत्कण्ठितः आस्ते इति शेषः। अद्य तवाभिसारः सर्वथा निर्विघ्न इति भावः।

६६। वदन्तीति।—आदौ जगणतगणौ तदनु जगणरगणौ यदि वर्त्तेताम्, तदा तत् वृत्तं वंशस्थविलं वदन्ति कथयन्ति। यथा—विलासेति।—यः हरिः, मुखानिलैः विलासवंशस्थविलं विलासस्य लीलाया यो वंशः वंशीति भावः। तत्स्थं विलं तदीयरन्ध्रं प्रपूर्य्य पूरयित्वा पञ्चमरागं गान्धाराद्यन्यतमपञ्चमाख्यरागम् उद्गिरन् उच्चैर्गायन् व्रजाङ्गनानां गानशालिनां गायकानां नारदप्रभृतीनामपि मानं व्रजाङ्गनापक्षे प्रेमाभिमानं नारदादिपक्षे नायकत्वाभिमानञ्च जहार, सः श्रीकृष्णः नः अस्मान् पुनातु।

६७। तच्चेति।—प्रथमाक्षरे आदिवर्णे गुरौ सति तत् वंशस्थविलम् इन्द्रवंशा नाम वृत्तं भवेत्। दैत्येन्द्रेति।—उदीर्णा उद्गता दीधितिः किरणो यस्य स उदीर्णदीधितिः

---

৬৬। যে ছন্দে ক্রমশঃ "জ" "ত" "জ" ও "র" গণ মাত্র থাকে, তাহাকে 'বংশস্থবিল' ছন্দঃ কহে।

৬৭। যে ছন্দে কেবল প্রতিপাদের প্রথমাক্ষরের গুরুত্ব হেতু বংশস্থবিলবৃত্তের সহ বৈসাদৃশ্য ঘটিবে, তাহা "ইন্দ্রবংশা" নামে কথিত হয়।

ज स ज स
६८। जसौ जसयुतौ "जलोद्धतगतिः" ।
। ऽ । । । ऽ । ऽ । । ऽ

यदीयहलतो विलोक्य विपदं कलिन्दतनया जलोद्धतगतिः ।
विलासविपिनं विवेश सहसा करोतु कुशलं हली स जगताम् ॥
सनाकवनितं नितम्बरुचिरं चिरं सुनिनदैर्नदैर्वृतममुम् ।
मता फणवतोऽवतो रसपरा परास्तवसुधा सुधाधिवसति ॥

इति भारवी ( ५।२७ )।

---

जगतां विश्वेषां लोकानां तमोऽपहः पापतिमिरविनाशी, असौ पीताम्बरः श्रीकृष्णः, दैत्येन्द्रवंशाग्निः दैत्येन्द्राणां असुरश्रेष्ठानां यो वंशः सन्तानः स एव वंशः वेणुः तत्र अग्निः तद्विनाशकत्वात् इत्यर्थः, अमूदिति शेषः। यस्मिन् अग्निरूपे श्रीकृष्णे ते प्रसिद्धाः कंसचाणूरमुखाः कंसचाणूरप्रभृतयः मखद्विषः यज्ञविघातकाः दानवाः शलभाः पतङ्गा इव स्वयं ममज्जुः पतिताः। यथा अग्निना शलभा दह्यन्ते, तथा कंसादयो दानवा श्रीकृष्णेन विनाशिता इति सरलार्थः। अलङ्कारौ रूपकोपमे ।

६८। जसाविति।—यत्र आदौ जसगणौ तदनु च जसगणौ सा जलोद्धतगतिर्नाम वृत्तम्। यदीयेति।—जलैस्तरङ्गमयैरुद्धता वेगवती गतिर्यस्याः, सा कलिन्दतनया यमुना यदीयहलतः यस्य लाङ्गलात् विपदम् अनिष्टं विलोक्य सहसा झटिति विलासविपिनं क्रीड़ोद्यानं विवेश बलरामस्य जलक्रीड़ार्थमिति शेषः। सः हली बलरामः

---

অর্থাৎ যাহার প্রতিপাদে ক্রমশঃ দুইটী "ত" একটী "জ" ও "র" গণ থাকে, তাহাই 'ইন্দ্রবংশা' বৃত্ত।

৬৮। যে ছন্দে ক্রমশঃ 'জ" "স" 'জ" ও "স" গণ মাত্র থাকে, তাহা 'জলোদ্ধতগতি' নামে কথিত হয়।

य य य य

## ६९। "भुजङ्गप्रयातं" चतुर्भिर्यकारैः।

। ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ

सदारात्मजज्ञातिभृत्यो विहाय स्वमेतं ह्रदं जीवनं लिप्समानः।
मया क्लेशितः कालियेत्थं कुरु त्वं भुजङ्ग प्रयातं द्रुतं सागराय॥

---

जगतां सर्व्वेषां कुशलं करोतु। कदाचित् मदमत्तो बलदेवः गोपाङ्गनाभिः सह जल-क्रीड़ार्थं यमुनामाहूतवान्, सा लाङ्गलसमाकर्षणभयेन व्यस्ता तस्य क्रीड़ोपवनमुपगतेति पौराणिकी वार्त्ता।

उदाहरणान्तरं—सनाकवनितमित्यादि।—नाकवनिताभिः अप्सरोभिः सह वर्त्तमानं सनाकवनितं नितम्बैः कटकैः रुचिरं मनोहरम्। "कटकोऽस्त्री नितम्बोऽद्रे"रित्यमरः। शोभनो निनदो वीचिध्वनिर्येषां तैः सुनिनदैः नदैः जलप्रवाहैश्च। वेष्टितम् अमुं पर्व्वतं अस्मिन् पर्व्वते इत्यर्थः। अध्युपसर्गयोगेन व्याप्यत्वात् द्वितीया। रसपरा मधुरा-स्वादा, परास्ता त्यक्ता वसुधा धरणी यया सा परास्तवसुधा, अवतः धारणेन इविर्वीं रक्षतः फणवतः अनन्तस्य मता वाञ्छिता सुधा पीयूषं अधिवसति अधितिष्ठति। अन्यत्र कुत्रापि धरणीतले सुधा न वर्त्तते अत्रैव सा स्थितेति।

६९। भुजङ्गेति।—चतुर्भिर्यकारैः यगणैः निबद्धं वृत्तं भुजङ्गप्रयातं नाम स्यात्। यथा—सदेति। हे कालिय! हे भुजङ्ग! त्वं मया इत्थम् एवं क्लेशितः पीड़ितः असि। दाराः पत्नः आत्मजाः सन्तानाः ज्ञातयो बन्धवः भृत्याः अनुचराः तैः सह वर्त्तमानः सदारात्मजज्ञातिभृत्यः अधुना त्वमिति शेषः। जीवनं लिप्समानः लब्धु-मिच्छन् एतं स्वं स्वकीयं ह्रदं कालियनामकं विहाय त्यक्त्वा द्रुतं शीघ्रं सागराय प्रयातं प्रयाणं कुरु।

---

৬৯। যে ছন্দে ক্রমশঃ চারিটী "য" গণ থাকে, তাহা "ভুজঙ্গপ্রয়াত' নামে কথিত হয়।

स स स स

७०। वद "तोटक" मब्धिसकारयुतम्।

। । S । । S । । S । । S

यमुनातटमच्युतकेलिकला-लसदङ्घ्रिसरोरुहसङ्गरुचिम्।

मुदितोऽट कलेरपनेतुमघं यदि चेच्छसि जन्म निजं सफलम्॥

र र र र

७१। कीर्त्तितैषा चतूरेफिका "स्रग्विणी"।

S । S S । S । S S । S । S

इन्द्रनीलोपलेनेव या निर्म्मिता शातकुम्भद्रवालङ्कृता शोभते।

नव्यमेघच्छविः पीतवासा हरेर्मूर्त्तिरास्तां जयायोरसि स्रग्विणी॥

---

७०। वदेति—अब्धिसकारयुतं चतुर्भिः सगणैर्निबद्धं वृत्तं तोटकं वद कथय यत्र चत्वारः सगणास्तत् तोटकनाम वृत्तमिति। यथा—यमुनेति। हे साधो! यदि कलेः कलिकालस्य अघं पापम् अपनेतुं दूरीकर्त्तुं निज जन्म च सफलं सार्थकं कर्त्तुमिति शेषः। इच्छसि, तदा मुदितः सन्तुष्टः सन्, अच्युतस्य केलिकलया नृत्यविद्यया लसत् विलसत् यत् अङ्घ्रि-सरोरुहं तस्य सङ्गेन सम्पर्केण रुचिः मनोज्ञा शोभा यस्य तं यमुना-तटं अट व्रज यमुनातटे विहर इत्यर्थः। "कूलं रोधश्च तीरञ्च प्रतीरञ्च तटं त्रिषु" इत्यमरः। "रुचिः स्त्रादे मयूखे च रुचिः शोभाभिलासयो"रिति मेदिनी।

७१। कीर्त्तितेति।—चत्वारो रेफा यत्र सा चतूरेफिका, एषा स्रग्विणी कीर्त्तिता। इन्द्रनीलेति।—या नव्यमेघच्छविः नव्यो नूतनो यो मेघः तस्य छविः कान्तिरिव छविः कान्तिर्यस्याः सा नव्यमेघच्छविः, पीतं वासः वस्त्रमस्याः सा पीतवासाः अत एव इन्द्रनीलोपलेन मरकतमणिना निर्म्मिता एवं शातकुम्भद्रवालङ्कृता काञ्चन-रसरञ्जिता इव शोभते; उरसि वक्षसि स्रग्विणी मालया विशिष्टा सा हरेर्मूर्त्तिः श्रीकृष्णस्य तनुः, जयाय आस्तां भवतु।

---

७०। যে ছন্দে ক্রমশঃ চারিটী "স" গণ থাকে, তাহার নাম 'তোটক'।

৭১। যে ছন্দে যথাক্রমে চারিটি "র" গণ থাকে, তাহা 'স্রগ্বিণী' নামে কথিত হয়।

म म य य
७२। वाणाश्वैश्छिन्ना "वैश्वदेवी" ममौ यौ।
ऽ ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ

अर्चामन्येषां त्वं विहायामराणामद्वैतेनैकं कृष्णमभ्यर्च भक्त्या।
तत्राशेषात्मन्यर्चिते भाविनी ते भ्रातः सम्पन्नाराधना वैश्वदेवी॥

स ज स स
७३। "प्रमिताक्षरा" सजससैः कथिता।
। । ऽ । ऽ । । । ऽ । । ऽ

अमृतस्य शीकरमिवोद्गिरती रदमौक्तिकांशुलहरीच्छुरिता।
प्रमिताक्षरा मुररिपोर्भणितिर्व्रजसुभ्रुवामभिजहार मनः॥
प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता।
अवलम्बनाय दिनभर्त्तुरभून्न पतिष्यतः करसहस्रमपि॥

इति माघे।९।६।

७२। वाणाश्वैरिति।—वाणाश्वैश्च पञ्चभिः सप्तभिश्च अक्षरैश्छिन्ना कृतयतिः वैश्वदेवी नाम वृत्तम्भवेत्। अत्र प्रथमतः ममौ षड़क्षराणि गुरूणि, तत्र क्रमेण आदिलघुरूपं यगणद्वयम्। श्लोको यथा—अर्चेत्यादि। भक्तस्य भक्तं प्रति सम्बोधनम्। हे भ्रातः! त्वम् अन्येषाम् अमराणां देवानां अर्चां पूजां विहाय त्यक्त्वा अद्वैतेन'एकमेवाद्वितीय'मिति श्रुत्युक्तेन एकज्ञानेन भक्त्या चित्तानुरागेण एकं केवलं कृष्णमभ्यर्च्च पूजय। अशेषात्मनि विश्वरूपे तत्र विष्णौ अर्च्चिते पूजिते सति ते तव वैश्वदेवी विश्वे च ते देवाश्चेति तेषामियं निखिलदेवसम्बन्धिनी आराधना अर्चना सम्पन्ना निष्पन्ना भाविनी भविष्यति। सर्व्वदेवमयो विष्णुः, तस्मिंस्तुष्टे जगत्तुष्टं इत्यादिस्मरणात्, विष्णुपूजनेनैव निखिलदेवानां पूजनं भवतीति।

७३। प्रमिताक्षरेति।—सजससैर्गणैः निवद्धा प्रमिताक्षरा नाम वृत्तं कथिता।

১২। যে ছন্দে ক্রমশঃ দুইটী "ম" ও দুইটী "য" গণ থাকে এবং প্রথম

न　म　भ　र
७४। "द्रुतविलम्बित" माह नभौ भरौ।
। । । ऽ । । ऽ । । ऽ । ऽ

तरणिजापुलिने नववल्लवी-परिषदा सह केलिकुतूहलात् ।
द्रुतविलम्बितचारुविहारिणं हरिमहं हृदयेन सदा वहे ॥

---

अमृतस्येति ।—अमृतस्य पीयूषस्य शीकरं कणं उद्गिरती वर्षन्ती इव, रदा दन्ता एव मौक्तिकाणि तेषां अंशुलहर्य्या किरणसमूहेन छुरिता रञ्जिता, प्रमितानि परिमितानि अक्षराणि यस्यां सा प्रमिताक्षरा अल्पवर्णमयी मुररिपोः श्रीकृष्णस्य भणितिः उक्तिः, व्रजसुभ्रुवां व्रजाङ्गनानां मनः चित्तम् अभिजहार आचकर्ष । अलङ्कारः काव्यलिङ्गम् । उत्प्रेक्षा च ।

उदाहरणान्तरं—प्रतिकूलेति । विधौ दैवे चन्द्रे च प्रतिकूलतां प्रतिबन्धकताम् उपगते आश्रितवति सति बहुसाधनता बह्वपायवत्ता विफलत्वं निष्फलताम् एति प्राप्नोति । अदृष्टे विरुद्धे सति विपुलापि कार्य्यसाधनसामग्री व्यर्थैव भवतीति । तथाहि— पतिष्यतः पतनोन्मुखस्य दिनभर्त्तुः सूर्य्यस्य करसहस्रमपि किरणसहस्रमपि हस्तसहस्रमपि च अवलम्बनाय आश्रयाय न अभूत्, दैवमेव सर्व्वथा बलवदिति भावः । अत्र श्लेषः अर्थान्तरन्यासश्च अलङ्कारः ।

७४। द्रुतविलम्बितेति ।—यत्र आदौ नभौ गणौ तदनु भरौ गणौ निबध्येते तद्वृत्तं द्रुतविलम्बितं नाम आह कथयति ।

उदाहरणं तरणिजेति ।—तरणिजा यमुना तस्याः पुलिनं सैकतं तस्मिन्, नव-वल्लवीपरिषदा नवा तरुणी या वल्लवीपरिषत् गोपिकासमूहः तया सह केलिकुतूहलात्

---

পঞ্চাক্ষরে ও পরে সপ্তাক্ষরে যতি থাকে, তাহা 'বৈশ্বদেবী'নামে কথিত হয়।

৭৩। প্রতিপাদে ক্রমশঃ "স" "জ" ও দুইটী "স" গণ থাকিলে 'প্রমিতাক্ষরা' ছন্দঃ হয়।

न न र र
७५। ननररघटिता तु "मन्दाकिनी"।
। । । । । । ऽ । ऽ ऽ । ऽ

बलिदमनविधौ बभौ सङ्गता पदजलरुहि यस्य मन्दाकिनी।
सुरनिहितसिताम्बुजस्रङ्निभा हरतु जगदघं स पीताम्बरः॥
सहशरधि निजं तथा कार्म्मुकं वपुरतनु तथैव संवर्म्मितम्।
निहितमपि तथैव पश्यन्नसिं वृषभगतिरुपाययौ विस्मयम्॥

इति भारवौ ११८।१६।

अतिसुरभिरभाजि पुष्पश्रियामतनुतरतयेव सन्तानकः।
तरुणपरभृतः स्वनं रागिणामतनुत रतये वसन्तानकः॥

इति माघे।६।६७।

---

रतिकौतुकात् द्रुतम् अविलम्बितं विलम्बितं मन्थरञ्च अतएव चारु रमणीयं यथा स्यात् तथा विहरति नृत्यतीति द्रुतविलम्बितचारुविहारिणं (द्रुतविलम्बितचारु इति त्रीण्येव पदानि क्रियाविशेषणानि) हरिं श्रीकृष्णं सदा वहे अहम् मनसा हृदि धारयामि चिन्तयामीति भावः।

७५। ननरेति।—नगणद्वय-रगणद्वयनिबद्धा मन्दाकिनी नाम वृत्तम् भवेत्। यथा—बलिदमनेति।—मन्दाकिनी गङ्गा, बलिदमनविधौ बलिदानवराजशासनकर्म्मणि यस्य श्रीकृष्णस्य पदजलरुहि चरणाम्बुजे जले रोहतीति जलरुट्, क्विवन्तः, ऊर्द्ध्वगपादपद्मे इत्यर्थः। सङ्गता मिलिता सती, सुरनिहिता देवगणार्पिता या सिताम्बुजस्रक् श्वेतपद्ममाला तन्निभा तत्तुल्या बभौ शुशुभे। सः पीताम्बरः श्रीकृष्णः जगदघं निखिलपापं हरतु विनाशयतु।

सहेति।—वृषभवत् गतिर्यस्य सः मन्थरगतिरित्यर्थः। सः धनञ्जयः शरधिना सह वर्त्तमानं सहशरधि सनिषङ्गं, सहः सोवेति वैकल्पिकः सभावः। निजं कार्म्मुकं गाण्डीवं धनुरित्यर्थः। तथैव पूर्व्ववदेव संवर्म्मितं सम्यक् कवचावृतम् अतनु विपुलं

---

१४। ক্রমে একটী "ন" দুইটী "ভ" ও একটী "র" গণ থাকিলে তাহাকে 'দ্রুতবিলম্বিত' ছন্দঃ কহে।

न　य　न　य

७६ । नयसहितौ न्यौ "कुसुमविचित्रा" ।

। । । । ऽ ऽ । । । । ऽ ऽ

विपिनविहारे कुसुमविचित्रा कुतकितगोपीमहितचरित्रा ।
मुररिपुमूर्त्तिर्मुखरितवंशा चिरमवतात् तरलवतंसा ॥

---

वपुः शरीरम् असिमपि खड्गञ्च तथैव पूर्व्ववदेव पश्यन् विस्मयम् उपाययौ प्राप्तवान्, विस्मितोऽभूदित्यर्थः । किरातवेशिना प्रमथपतिना पूर्व्वं निषङ्गादीनां भक्षणात् पुनरपि कथं तान्यवेति विस्मयहेतुः ।

अतिसुरभीति ।—अतिसुरभिः महासुगन्धिः "सुरभिर्गवि गन्धे च वसन्ते च मनोरमे" इति कोषः । सन्तानकः कल्पतरुः, पुष्पश्रियां पुष्पसमृद्धीनाम् अतनुतरतया महत्त्वेन अभाजि अभञ्जि इव । अतिनम्र इति भावः । भन्जधातोर्णिचि रूपम् अभाजीति । कालापास्तु भजेरिचि भञ्जनेऽपि वा वृत्तिरिति भजधातुनैव भञ्जनेऽर्थे अभाजीति साधयन्ति । एष वसन्तस्य ऋतुराजस्य आनकः दुन्दुभिस्वरूपः तरुणपरभृतः पिकयुवा रागिणां कामिनां रतये अनुरागवृद्धये स्वनं निनदम् अतनुत मधुरं कूजितवानित्यर्थः । 'ध्वनिध्वानरवस्वनाः' इत्यमरः ।

७६ । नयनेति ।—यस्याः पादे नयसहितौ न्यौ, आदौ नगणस्तदनु यगणस्तदनु नगणस्तदनु च यगण इत्यर्थः, सा कुसुमविचित्रा नाम वृत्तं भवेत् ।

विपिनेति ।—विपिनविहारे वनविहारे कुसुमविचित्रा पुष्पविभूषिता, कुतुकं संजातमासां कुतकिताः जातकौतूहलाः या गोप्यः गोपाङ्गनाः ताभिः महितं पूजितं चरित्रं यस्याः सा, मुखरितः वादितः वंशः वेणुर्यया सा, तरलवतंसा चञ्चलकर्णभूषणा । "अवतंसः शिरोभूषा कर्णभूषा च कथ्यते" इति कोषः । अवस्य तं सेरिति अकारस्य

---

৭৫। যে ছন্দে প্রতিপাদে ক্রমশঃ দুইটি "ন" ও দুইটী "র" গণ থাকে, তাহাকে "মন্দাকিনী" ছন্দঃ কহে।

৭৬। ক্রমশঃ প্রতিপাদে একটী "ন" একটী "য" পরে একটী "ন" ও একটি "য" গণ থাকিলে "কুসুমবিচিত্রা" ছন্দঃ হয়।

न ज ज य

७७। इह वद "तामरसं" नजजा यः।

। । । । S । । S । । S S

स्फुटसुषमामकरन्दमनोज्ञं व्रजललनानयनालिनिपीतम्।
तव मुखतामरसं मुरशत्रो। हृदयतड़ागविकाशि ममास्तु॥

न ज ज र

७८। भवति नजावथ "मालती" जरौ।

---

पाश्चिको लोपः। मुररिपुमूर्त्तिः श्रीकृष्णतनुः, वः युष्मान् चिरम् अवतात् रक्षतु। आशिषि तुह्योस्तातङ् इति तुस्थाने तातङि अवधातो रूपम्।

७७। इहेति।—नजजगणानन्तरं यगणो वर्त्तते चेत्, तर्हि इह छन्दःशास्त्रे तामरसं नाम वद कथय।

स्फुटेति।—हे मुरशत्रो श्रीकृष्ण! स्फुटा सुव्यक्ता या सुषमा परमा शोभा सा एव मकरन्दः पुष्परसः तेन मनोज्ञं मनोहरम्। 'सुषमा परमा शोभा' इति, 'मनोज्ञं मञ्जु मञ्जुल'मिति चामरः। व्रजललनानां गोपाङ्गनानां नयनानि नेत्राण्येव अलयो भ्रमरास्तैर्निपीतं सतृष्णमवलोकितं तव मुखतामरसं मुखकमलं 'पङ्केरुहं तामरसं सारसं सरसीरुह'मित्यमरः। मम हृदयमेव तड़ागः पद्माकरः। "पद्माकरस्तड़ागोऽस्त्री" इत्यमरः। तस्मिन् विकाशि विराजमानम् अस्तु। विपूर्व्वककाशधातोर्णिन्, घञन्तात् अस्यास्तीत्यर्थे इन् वा। रूपकमलङ्कारः।

७८। भवतीति।—आदौ नजगणौ अथ अनन्तरं जरगणौ च यत्र वर्त्तते, सा मालती नाम वृत्तिः भवति।

---

৭৭। ক্রমশঃ প্রতিপাদে একটী "ন" দুইটী "জ" ও একটী 'য' গণ থাকিলে 'তামরস' ছন্দ হয়।

৭৮। প্রতিপাদে ক্রমশঃ একটী "ন" দুইটী ''জ" ও একটী "র" গণ থাকিলে 'মালতী' ছন্দ হয়।

। । । ऽ । ऽ । । ऽ ऽ

इह कलयाच्युत ! केलिकानने मधुरस-सौरभसारलोलुपः ।

कुसुमकृतस्मितचारुविभ्रमा-मलिरपि चुम्बति मालतीं मुहुः ॥

यमुना क्वापि ।

अयि ! विजहीहि दृढ़ोपगूहनं त्यज नवसङ्गमभीरु ! वल्लभम् ।

अरुणकरोद्गम एष वर्त्तते वरतनु ! सम्प्रवदन्ति कुक्कुटाः ॥

इति भारवौ ।

---

उदाहरणमिहेति ।—हे अच्युत श्रीकृष्ण ! कलय अवलोकय । कर्म वक्ष्यमाणो वाक्यार्थः । इह अस्मिन् केलिकानने विहारवने मधुरसस्य मकरन्दस्य सौरभसारेण सद्गन्धेन लोलुपः लोभपरवशः अलिः भ्रमरः अपि, कुसुमैः पुष्पैः कृतं यत् स्मितम् ईषद्धासः तदेव चारुः रमणीयः विभ्रमः विलासो यस्याः ताम् ईषद्धासेन प्रकाशित-स्वाभिप्रायामिति भावः । मालतीं तदाख्यां लतिकां मुहुः वारंवारं चुम्बति । अत्र अचेतनाया लतायाः तिर्यग्योनेर्भ्रमरस्यापि एवं मनोविकारः, मानवानां पुनः का कथा इति भावः । अत्र नायकनायिकाव्यवहारप्रतीतेः समासोक्तिरलङ्कारः ।

अयीति ।—अयि नवसङ्गमभीरु ! नूतनसहवासप्रकाशभीते ! दृढ़ोपगूहनं गाढ़ालिङ्गनं विजहीहि त्यज । गूह संवरणे इत्यस्मादुपपूर्व्वकात् भावे ल्युट्,— उपगूहनम् । विजहीहि विपूर्व्वकात् हाधातोः ही कृते पाचिकं रूपम्, ही चालमिल्लमीत्वञ्चेष्टमिति इत्वम् । वल्लभं कान्तं त्यज मुञ्च । (यतः) हे वरतनु ! हे सुन्दरि ! वरा तनुर्यस्याः तत्सम्बोधने, 'स्त्रियां मूर्त्तिस्तनुस्तनूः' इत्यमरः । एष वहिर्दृश्यमानः अरुणकरस्य सूर्य्यकिरणस्य उद्गमः उदयः वर्त्तते, अधुनापि सूर्य्यो न समुदेति तस्य किरणोदयमात्रं संलक्ष्यते इत्यर्थः । कुक्कुटाः रात्र्यवसानसूचकाः पक्षि-विशेषाः सम्प्रवदन्ति शब्दायन्ते । अतः साम्प्रतमेव शय्यातः समुत्थानमुचितमिति भावः । अलङ्कारः काव्यलिङ्गम् ।

त य त य

७९। त्यौ त्यौ "मणिमाला" छिन्ना गुहवक्त्रैः।

ऽऽ।।ऽऽ ऽऽ।।ऽऽ

प्रह्वामरमौलौ रत्नोपलक्लृप्ते जातप्रतिबिम्बा शोणा मणिमाला।
गोविन्दपदाब्जे राजी नखराणामास्तां मम चित्ते ध्वान्तं शमयन्ती॥

म भ स म

८०। मो भः स्मौ चे "जलधरमाला" ब्धयन्त्यैः।

ऽ ऽऽ ऽ ।।।।ऽऽऽऽ

या भक्तानां कलिदुरितोत्तप्तानां तापच्छेदे जलधरमाला नव्या।
भव्याकारा दिनकरपुत्रीकूले केलीलोला हरितनुरव्यात् सा वः॥

---

७९। त्याविति।—यत्र तगणो यगणः ततोऽपि तगणो यगणश्च वर्त्तते, तत् मणिमालानाम वृत्तम्भवेत्। एषा गुहवक्त्रैः षड्भिर्वर्णैश्छिन्ना भवति, अत्र षड्भिरक्षरैर्यतिः कर्त्तव्येत्यर्थः।

उदाहरणं—प्रह्वेति।—रत्नोपलैः चन्द्रकान्तादिमणिभिः क्लृप्ते खचिते प्रह्वाः प्रणताः ये अमरा देवास्तेषां मौलौ किरीटे जातः संक्रान्तः प्रतिबिम्बः छाया यस्याः सा जातप्रतिबिम्बा अतएव शोणा रक्तवर्णा मणिमाला मणिमयस्रक्स्वरूपा, गोविन्दस्य श्रीकृष्णस्य पदाब्जं चरणाम्बुजं तस्मिन् नखराणां नखानां राजी श्रेणिः, मम चित्ते मनसि ध्वान्तं मोहान्धकारं शमयन्ती सती आस्तां वर्त्तताम्। "प्रह्वोऽवनतकायः स्यात्" "चूड़ाकिरीटकेशाश्च संयता मौलयस्त्रयः।" इत्यमरः। श्रीकृष्णचरणनखश्रेणी प्रणमतामनराणां मणिमयकिरीटेषु प्रतिबिम्बिता सती तत्र मणिमाला इव शुशुभे इत्यर्थः। अत्र नखराणां मणिमालात्वारोपात् रूपकालङ्कारः। स च काव्यलिङ्गानुप्राणित इति।

८०। मो भ इति।—चेत् यदि आदौ मगणः तदनु भगणः तदनु सगणः तदनु

---

৭৯। প্রতিপাদে ক্রমশঃ একটী "ত" একটী 'য" পরে একটী 'ত" ও একটী "য" গণ এবং ছয় অক্ষরে যতি থাকিলে 'মণিমালা' ছন্দ হয়।

৮০। যে ছন্দে প্রতিপাদে ক্রমে একটী "ম" একটী 'ভ" একটী "স'

न　न　म　य

८१ । वसुयुगविरतिर्नौ म्यौ "पुटो"ऽयम् ।

न　भ　ज　र

८२ । भुवि भवेन्नभजरैः "प्रियंवदा" ।

---

च मगणः स्यात् तदा जलधरमाला नाम वृत्तं स्यात् । अत्र अब्धिभिश्चतुर्भिरक्षरैः अन्तैः द्वादशाक्षरैश्च यतिर्निर्द्देष्टव्या । या भक्तानामित्यादि—या ( हरितनुः ) कलिदुरितो-त्तप्तानां कलिकालपापदग्धानां भक्तानां सेवकानां तापच्छेदे सन्तापनिवारणविषये नव्या नवीना जलधरमाला मेघपङ्क्तिरूपा, सा भव्याकारा माङ्गल्यरूपा मनोरमा वा, दिनकरपुत्रीकूले यमुनातीरे, केलीलोला क्रीड़ापरवशा, हरितनुः श्रीकृष्णमूर्त्तिः, वः युष्मान् अव्यात् रक्षतु । अलङ्कारो रूपकम् ।

८१ । वसुयुगेति ।—यत्र नगणद्वयं ततः मगणयगणौ भवेताम्, अयं पुटो नाम वृत्तं भवेत् । अत्र वसुभिरष्टमाक्षरैः युगैश्चतुर्थाक्षरैश्च यतिः कर्त्तव्या ।

८२ । भुवीति ।—यस्याः पादः नभजरैर्गणैः निबद्धः स्यात्, इयं भुवि पृथिव्यां प्रियंवदा नाम वृत्तिः भवेत् ।

---

ও একটী "ম" গণ থাকিবে এবং প্রথম চারি অক্ষরে ও পরে দ্বাদশাক্ষরে যতি পড়িবে, তাহা 'জলধরমালা' নামে অভিহিত হয়।

৮১। যে ছন্দে প্রতিপাদে ক্রমে দুইটী "ন" একটী "ম" একটী "য" গণ থাকে এবং প্রথমতঃ অষ্টমাক্ষরে ও পরে চতুর্থাক্ষরে যতি থাকে, তাহাকে 'পুট' ছন্দ কহে।

৮২। প্রতিপাদে ক্রমশঃ একটী "ন" "ভ" "জ" ও "র" গণ থাকিলে তাহাকে 'প্রিয়ংবদা' কহে।

त भ ज र
८३। धीरैरभाषि "ललिता" तभौ जरौ।

न न भ र
८४। ननभरसहिता गदि"तोज्ज्वला"।

न ज भ य
८५। इह "नवमालिका" नजभयैः स्यात्।

इति वृत्तरत्नाकरे।

---

८३। धीरैरिति।—यस्याः पादे आदौ तभौ गणौ तदनु जरौ गणौ भवेताम्, इयं धीरैः पण्डितैः ललिता नाम अभाषि उक्ता।

८४। ननेति।—ननभरसहिता ननभरैर्गणैर्निबद्धा इत्यर्थः। उज्ज्वला नाम गदिता उक्ता।

८५। इहेति।—नजभयैर्गणैर्निबद्धा इह छन्दःशास्त्रे नवमालिका नाम वृत्तिः स्यात्।

---

৮৩। যে ছন্দে প্রতিপাদে ক্রমশঃ একটী "ত" একটী "ভ" একটী "জ" ও একটী "র" থাকে, তাহা 'ললিতা' নামে পণ্ডিতগণকর্ত্তৃক কথিত হইয়াছে।

৮৪। যে ছন্দে প্রতিপাদে ক্রমশঃ দুইটী "ন" গণ একটী "ভ" গণ ও একটী "র" গণ থাকে, তাহা 'উজ্জ্বলা' নামে কথিত হয়।

৮৫। যে ছন্দে প্রতিপাদে ক্রমে একটী করিয়া "ন" "জ" "ভ" "য" গণ থাকে, তাহাকে 'নবমালিকা' ছন্দঃ কহে।

भ म स स

८६ । पञ्चमुनि भ्मौ स्यात् सयुता "ललना" ।

न न म र

८७ । "ललित"-मभिहितं नौ म्रौ नामतः ।

न भ न य

८८ । "द्रुतपदं" भवति नभनयाश्चेत् ।

म म म म

८९ । सर्व्वे मा यस्मिन् सोऽयं "विद्याधारः" स्यात् ।

---

८६ । पञ्चेति ।—यस्याः पादे आदौ भगणमगणौ तदनु सगणद्वयं वर्त्तते, इयं ललना नाम वृत्तं स्यात । अत्र पञ्चमैः सप्तमैश्च वर्णैः यतिः कर्त्तव्या ।

८७ । ललितेति ।—यस्य पादे आदौ नगणौ ततो मगणरगणौ इदं नामतः नाम्ना ललितम् अभिहितं उक्तम् ।

८८ । द्रुतेति ।—चेत् यदि नभनया गणा वर्त्तन्ते, तदा द्रुतपदं नाम वृत्तम्भवति ।

८९ । सर्व्वं इति ।—यस्मिन् ( द्वादशाक्षरपादकवृत्ते ) सर्व्वे माः दीर्घा इत्यर्थः । सोऽयं विद्याधारो नाम वृत्तं स्यात् ।

---

৮৬। যে ছন্দে প্রতিপাদে ক্রমশঃ "একটী "ভ" একটী "ম" ও দুইটী "স" গণ থাকে, এবং প্রথম পঞ্চম অক্ষরে এবং পরে সপ্তমাক্ষরে যতি থাকে, তাহাকে 'ললনা' ছন্দ কহে।

৮৭। যে ছন্দে প্রতিপাদে ক্রমশঃ "দুইটী "ন" একটী "ম" ও একটী "র" গণ থাকে তাহাকে 'ললিত' ছন্দ কহে।

৮৮। যে ছন্দে প্রতিপাদে ক্রমশঃ একটী "ন" একটী 'ভ" একটী "ন" একটী "য" গণ থাকে, তাহাকে 'দ্রুতপদ' ছন্দ কহে।

জ র জ র

৮০। লঘুগুরুর্বদন্তি "পঞ্চচামরম্"।

ত ত ত ত

৮১। "সারঙ্গ"-সংজ্ঞং সমস্তৈস্তকারৈস্তু।

জ জ জ জ

৮২। সমস্তজমীরয় "মৌক্তিকদাম"।

ভ ভ ভ ভ

৮৩। "মোটক"নাম সমস্তভমীরয়।

---

৮০। লঘ্বিতি।—যস্মিন্ (দ্বাদশাক্ষরপাদকবৃত্তে) আদৌ লঘুস্ততো গুরুঃ এবং ক্রমঃ স্যাৎ, তদ্বৃত্তং পঞ্চচামরং নাম বদন্তি।

৮১। সারঙ্গেতি।—সমস্তৈস্তকারৈশ্চতুর্ভিস্তকারৈর্নিবদ্ধঃ যস্য পাদো ভবতি, তৎ সারঙ্গসংজ্ঞং ভবতি।

৮২। সমস্তেতি।—সমস্তা জগণা যত্র তদ্বৃত্তং মৌক্তিকদামসংজ্ঞকং ঈরয় কথয়।

৮৩। মোটকেতি।—সমস্তা ভগণা যত্র তদ্বৃত্তং মোটকং নাম ঈরয় কথয়।

---

৮৯। যাহার প্রতিপাদে কেবল "ম" গণ থাকে তাহাকে 'বিদ্যাধার' ছন্দঃ কহে।

৯০। প্রতিপাদে ক্রমে একটী লঘু ও একটী গুরু এইরূপ অক্ষর সন্নিবিষ্ট হইলে তাহাকে 'পঞ্চচামর' ছন্দঃ কহে।

৯১। প্রতিপাদে কেবল "ত" গণ সন্নিবিষ্ট হইলে তাহাকে 'সারঙ্গ' ছন্দঃ জানিবে।

৯২। প্রতিপাদে কেবল "জ" গণ সন্নিবিষ্ট হইলে তাহাকে 'মৌক্তিক-দাম' ছন্দঃ জানিবে।

ন ন ন ন

৯৪। রবিলঘু "তরলনয়ন"-মিহ।

ইতি বৃত্তরত্নাকরপরিশিষ্টে।

অতিজগতী। ত্রয়োদশাক্ষরা বৃত্তি:।

ম ন জ র গ

৯৫। ত্র্যাশাভির্মনজরগা "প্রহর্ষিণীয়ম্"।

ऽ ऽ ऽ । । । । ऽ । ऽ । ऽ ऽ

গোপীনামধর-সুধারসস্য পানৈ-রুত্তুঙ্গস্তনকলসোপগূহনৈশ্চ।

আশ্চর্য্যৈরপি রতিবিভ্রমৈর্মুরারে: সংসারে মতিরভবৎ প্রহর্ষিণীহ॥

---

৯৪। রবীতি।—রবিলঘু দ্বাদশ এব বর্ণা যত্র লঘবস্তদ্বৃত্তং ইহ ছন্দ:শাস্ত্রে তরলনয়নং কথ্যতে।

৯৫। ত্র্যাশেতি।—যস্যাং মনজরগা বর্ত্তন্তে, ইয়ং প্রহর্ষিণী নাম বৃত্তম্। অত্র ত্র্যাশাভি: বিভিন্ন্ব্রভিস্ত্র অক্ষরৈর্যতি: কর্ত্তব্যা।

গোপীনামিতি।—ইহ জগতি গোপানাং গোপাঙ্গনানাম্ অধরসুধারসস্য অধরামৃতদ্রবস্য পানৈ: স্তনকলসানাং স্তনকুম্ভানাম্ উপগূহনৈ: আলিঙ্গনৈ: আশ্চর্য্যৈরদ্ভুতৈ: রতিবিভ্রমৈ: সুরতবিলাসৈরপি। অপি চার্থে। মুরারে: শ্রীকৃষ্ণস্য প্রহর্ষিণী প্রকৃষ্টমোদদায়িনী মতি: ইচ্ছা অভবৎ। 'মতি: স্ত্রীচ্ছাধিয়ো স্মৃতৌ'তি মেদিনী।

---

৯৩। প্রতিপাদে "ভ"গণ মাত্র সন্নিবিষ্ট হইলে তাহাকে "মোটক" জানিবে।

৯৪। যাহার প্রতিপাদের দ্বাদশটী অক্ষরই লঘুবর্ণে গঠিত, তাহা 'তরলনয়ন" নামে অভিহিত হয়।

অতিজগতী ( ত্রয়োদশাক্ষরা বৃত্তি )।

৯৫। যাহার প্রতিপাদে ক্রমশ: একটী "ম" একটী "ন" একটী "জ" একটী "র" ও একটী "গ" গণ থাকে এবং প্রথম তৃতীয় অক্ষরে ও পরে দশমাক্ষরে যতি থাকে, তাহা "প্রহর্ষিণী" নামে কথিত হয়।

न भ स ज ग

९६ । जभौ सजौ गिति रुचिरा चतुर्ग्रहैः ।

। ऽ । ऽ । । । । ऽ । ऽ । ऽ

पुनातु वो हरिरतिरासविभ्रमी परिभ्रमन् व्रजरुचिराङ्गनान्तरे ।
समीरणोल्लसितलतान्तरालगो यथा मरुत्तरलतमालभूरुहः ॥

अभून्नृपो विबुधसखः परन्तपः श्रुतान्वितो दशरथ इत्युदाहृतः ।
गुणैर्वरं भुवनहितच्छलेन यं सनातनः पितरमुपागमत् स्वयम् ॥

इति भट्टौ ॥१॥

---

९६ । जभाविति ।—यस्याः पादे आदौ जभगणौ तदनु च सजगणौ एकाक्षरं गुरुः इति इयं रुचिरा नाम, अस्यां चतुर्थैस्तदनु नवमैश्च अक्षरैर्यतिः कार्य्या ।

पुनात्विति ।—अतिरासविभ्रमी अतिशयेन रासविहारी हरिः, समीरणेन पवनेन उल्लसिताः चालिता या लताः तासाम् अन्तरालम् अवका गच्छतीति तथोक्तः, मरुत्तरलः पवनेन चञ्चलः तमालभूरुहः तमालाख्यतरुर्यथा व्रजरुचिराङ्गनान्तरे व्रजस्य गोकुलस्य याः रुचिराः मनोहरा अङ्गना रमण्यस्तासाम् अन्तरे मध्ये परिभ्रमन् भ्रमन् नृत्यन् इत्यर्थः । वः युष्मान् पुनातु ।

उदाहरणान्तरम् अभूदिति ।—विबुधानां देवानां पण्डितानां वा सखा मित्रं विबुधसखः । राजन्नहन् सखोति राजाहः सखिभ्यष्टच् इति वा समासान्तः । परान् शत्रून् तापयतीति परन्तपः । वहंलिहेत्यादिना निपातितः । श्रुतान्वितः श्रूयन्ते इति श्रुतानि शास्त्राणि तैरन्वितः युक्तः समधीतशास्त्र इत्यर्थः । दशरथ इति नाम्ना उदाहृतः विख्यातः नृपः राजा अभूत आसीत् । सनातनो नारायणः भुवनहितच्छलेन रावणवधादिरूपजगदुपकारव्याजेन गुणैः धैर्य्यादिभिः वरं श्रेष्ठं यं ( नृपम् ) स्वयम् आत्मना पितरम् उपागमत् जनकत्वेन अङ्गीकृतवान् ।

---

৯৬। যে ছন্দে প্রতিপাদে ক্রমশঃ একটী "জ" একটী "ভ" একটী "স" একটী "জ" ও একটী "গ" গণ থাকে, এবং প্রথম চতুর্থ অক্ষরে পরে নবম অক্ষরে যতি থাকে, তাহাকে 'রুচিরা" ছন্দ কহে।

म　त　य　स　ग

८७। वेदैरन्धैर्म्तौ यसगा "मत्तमयूरम्" ।

लीलानृत्यन्मत्तमयूरध्वनिकान्तं नृत्यन्नीपामोदिपयोदानिलरम्यम् ।
रासक्रीड़ाकृष्टमना गोपवधूभिः कंसध्वंसी निर्जनवृन्दावनमाप ॥
हा तातेति क्रन्दितमाकर्ण्य विषण्णस्तस्यान्विष्यन् वेतसगूढ़ं
प्रभवं सः ।
शल्यप्रोतं वीक्ष्य सकुम्भं मुनिपुत्रं तापादन्तःशल्य इवासीत्
क्षितिपोऽपि ॥
इति रघौ ॥९।७५॥

---

८७। वेदैरिति।—यस्य पादे आदौ मगणः तदनु तगणः यगणः सगण एको गुरुरपि वर्त्तते, चतुर्थैर्नवमैश्च विच्छिन्नं तद्वृत्तं मत्तमयूरं नाम कथ्यते इति शेषः ।

लीलेति। गोपवधूभिः कार्वीभिः सह वा, रासक्रीड़या आकृष्टं मनो यस्य सः कंसध्वंसी श्रीकृष्णः, लीलया विलासेन नृत्यतां आरब्धनृत्यानां मत्तमयूराणां ध्वनिभिः केकारवैः कान्तं मनोहरं नृत्यन् नीपामोदी कदम्बकुसुमसौगन्धशाली यः पयोदानिलः मेघसम्पृक्तो वायुः तेन रम्यं मनोज्ञं निर्जनं विद्यन्ते जना यत्र तादृशं वृन्दावनम् आप प्राप्तवान्। शैत्यसौगन्ध्यमान्द्येति विविधधर्म्मयुक्तेन पवनेन निर्ज्जनतया च वृन्दावनं सुखविलासमिति।

हा तातेति।—सः क्षितिपः दशरथोऽपि हा तात इति क्रन्दितं रोदनध्वनिम् आकर्ण्य श्रुत्वा, विषण्णः अहो ! किमिदमनुष्ठितमिति विपदं प्राप्तः सन् तस्य क्रन्दितस्य वेतसगूढ़ं वेतसाच्छन्नं प्रभवं कारणम् अन्विष्यन् अनुसन्धयत् शल्येन वाणेन प्रोतं विद्धं सकुम्भं कलसान्वितं मुनिसुतं वीक्ष्य तापात् खेदात् हेतोः अन्तः शल्यं यस्य तथोक्त इव आसीत ।

---

৯৭। যাহার প্রতিপাদে ক্রমশঃ একটী "ম" একটী "ত" একটী "য" একটী "স" ও একটী "গ" গণ থাকে, এবং চতুর্থ ও নবমাক্ষরে যতি থাকে, তাহাকে 'মত্তময়' ছন্দ কহে।

न न स स ग

९८। नयुगलसयुगलगैरिति "चण्डी"।

। । । । । । । । ऽ । । ऽ ऽ

जयति दितिजरिपुताण्डवलीला कुपितकवलकरकालियमौलौ।
चरणकमलयुगचापलचण्डी पदनखरुचिजितभोगमणिश्रीः॥

स ज स ज ग

९९। सजसा जगौ च यदि "मञ्जुभाषिणी"।

। । ऽ । ऽ । । । ऽ । ऽ । ऽ

अमृतोर्म्मिशीतलकरेण लालयंस्तनुकान्तिचोरितविलोचनो हरे।
नियतं कलानिधिरसीति वल्लवी मुदमचुरते व्यधित मञ्जुभाषिणी।

सुनन्दिनीति शम्भौ।

---

९८। नयुगलेति।—यस्याः पादाः नयुगलसयुगलगैर्निबद्धाः इति इयं चण्डी नाम वृत्तिः।

जयेति। कुपितस्य स्वाधिष्ठाने प्रवेशात् क्रुद्धस्य कवलकरस्य कवलं ग्रासं करोतीति तथोक्तस्य मुखं व्याददत इत्यर्थः। कालियस्य तदाख्यस्य नागस्य मौलौ मूर्द्धि पादनखानां रुचिभिः दीप्तिभिः जिता तिरस्कृता भोगमणिश्रीः फणस्थितरत्नशोभा यया सा, चरणकमलयोः पादपद्मयोः चापलेन चाञ्चल्येन चण्डी उद्धता दितिजरिपोः श्रीकृष्णस्य ताण्डवलीला नृत्यविलासः जयति सर्व्वोत्कर्षेण वर्त्तताम्।

९९। सजेति।—यदि आदौ सजसा गणाः, ततः जगणः, ततश्च एको गुरुस्तदा मञ्जुभाषिणी नाम वृत्तं स्यात्।

---

९৮। যাহার প্রতিপাদে দুইটী "ন" দুইটী "স" ও একটী "গ" গণ থাকে, তাহাকে 'চণ্ডী' ছন্দ কহে।

न न त त ग

१०० । ननततगुरुभि "चन्द्रिका" वृत्तभिः ।

। । । । । । । ऽ ऽ । ऽ ऽ । ऽ

शरदमृतरुचिश्चन्द्रिकाक्षालिते दिनकरतनयातीरदेशे हरिः ।
विहरति रभसाद्वल्लवीभिः समं त्रिदिवयुवतिभिः कोऽपि देवो यथा ॥
इह दुरधिगमैः किञ्चिदेवागमैः सततमसुतरं वर्णयन्त्यन्तरम् ॥
अमुमतिविपिनं वेद दिग्व्यापिनं पुरुषमिव परं पद्मयोनिः
परम् ॥५॥१८॥ इति भारवौ ।

उत्पलिनीति केचित् ।

---

अमृतोर्म्मीति । हे हरे ! तनुकान्त्या शरीरसौन्दर्य्येण चोरितानि अपहृतानि आकृष्टानीति भावः । विलोचनानि ( लोकानामिति भावः ) येन सः । रोचितेति पाठे तनुकान्तौ शरीरसौन्दर्य्यविषये रोचितानि साभिलाषीकृतानि विलोचनानि नयनानि ( लोकानां ) येन सः त्वं, यस्य शरीरकान्तिसमीचये. लोकलोचनानां स्पृहा भवतीति भावः । अमृतोर्म्मिशीतलकरेण सुधातरङ्गवत् शीतलेन करेण हस्तेन अथवा अमृतोर्म्मिभिः सुधातरङ्गैः शीतलेन करेण किरणेन । 'बलिहस्तांशवः कराः' इत्यमरः । लालयन् सस्पृहं स्पृशन् ( अस्मान् इति शेषः ) नियतं निश्चितं कलानिधिः चन्द्रमा असि । इति मञ्जुभाषिणो मधुरवादिनो वल्लवी गोपाङ्गना अच्युते शौरिणि अच्युतस्य इत्यर्थः । मुदं हर्षं व्यधित अतनोत् ।

१०० । ननेति ।—ननततगणैरेकेन गुरुणा च ग्रथिता चन्द्रिका नाम वृत्तं स्यात् । अत्र अश्वैः सप्तमैस्तत चतुर्भिः षष्ठैः अर्थात् त्रयोदशैरक्षरैर्यतिः कार्य्या ।

शरदमृतेति ।—हरिः, शरदः शरत्कालस्य यः अमृतरुक् चन्द्रः तस्य चन्द्रिकाभिः कौमुदीभिः क्षालिते धौते दूरीकृतान्धकारे इत्यर्थः । दिनकरतनया यमुना तस्यास्तीरदेशे

---

৯৯ । যে ছন্দে প্রতিপাদে ক্রমশঃ একটী "স" একটী "জ" একটী "স" একটী "জ" ও একটী "গ" গণ থাকে, তাহাকে 'মঞ্জুভাষিণী' কহে ।

स ज स स ग

१०१। सजसाः सगौ च कथितः "कलहंसः"।

। । ऽ । ऽ । । । ऽ । । ऽ ऽ

यमुनाविहारकुतुके कलहंसो व्रजकामिनीकमलिनीकृतकेलिः।
जनचित्तहारिकलकण्ठनिनादः प्रमदं तनोतु तव नन्दतनूजः॥

सिंहनादः क्वापि।

---

पल्लवीभिः गोपाङ्गनाभिः समं सह त्रिदिवयुवतिभिः स्वर्गीयरमणीभिः सनं कोऽपि दै इव रभसात् हर्षात् विहरति क्रीडति। 'रभसो वेगहर्षयोः' इति मेदिनी।

इहेति। इह अस्मिन् गिरौ सुखेन तीर्य्यत इति सुतरं तन्न भवतीति असुतरं दुस्तरं दुर्गममित्यर्थः। अन्तरं मध्यभागं पुरुषपक्षे अन्तरं तत्त्वम्। दुरधिगमैः दुर्ज्ञे आगमैः शास्त्रैः किञ्चिदेव सततं वर्णयन्ति पण्डिता इति शेषः। किन्तु अतिविपिनम् अतिगहनं दिग्व्यापिनम् अमुं गिरिं परं पुरुषम् इव परमात्मानमिव परं केवलं पद्मयोनिः ब्रह्मा वेद जानाति नान्य इत्यर्थः।

१०१। सजेति।—यस्य पादे आदौ सजसा गणास्तदनु सगणः तदनु च गुरुर्भवति, स कलहंसो नाम वृत्तं कथितः।

यमुनेति।—यमुनाविहारकुतुके यमुनायां यो विहारः जलक्रीडा तत्र कुतुकं कौतूहलं तस्मिन् व्रजकामिन्यो गोप्य एव कमलिन्यः पद्मिन्यः तासु कृतः केलिर्येन सः जनस्य चित्तं मनः हर्तुं शीलमस्य जनचित्तहारी तादृशः, कलः मधुरः कण्ठनिनादः कण्ठध्वनिर्यस्य सः कलहंसः हंसविशेषस्वरूपः, नन्दतनूजः श्रीकृष्णः, तव प्रमदम् आनन्दं तनोतु वर्द्धयतु। "कादम्बः कलहंसः स्या"दित्यमरः। रूपकमलङ्कारः।

---

১০০। যে ছন্দে প্রতিপাদে ক্রমে দুইটী "ন" দুইটী "ত" গণ ও একটী গুরুবর্ণ থাকে, এবং প্রথম সপ্তমাক্ষরে ও পরে ষষ্ঠাক্ষরে যতি থাকে, তাহা 'চন্দ্রিকা' নামে কথিত হয়।

स　ज　स　ज　ग

१०२ । सजसा जगौ च भवति "प्रबोधिता" ।

। । S । । । । । । S । S । S

ग्रथिता मृषाचटुलमाननिद्रया रतिकेलिकुञ्जनिलये विलासिनी ।
मुरवैरिणा श्रवणखर्ज्जनादिना स्मितमाततान सपदि प्रबोधिता ॥

न　ज　ज　र　ग

१०३ । भवति "मृगेन्द्रमुख" नजौ जरौ गः ।

। । । । S । । S । S । S S

गुरुभुज-वीर्य्यभरं हरिं मदान्धा युधि समुपेत्य न दानवा जिजीवुः ।
क्षुधितमृगेन्द्रमुखं मृगा उपेत्य क्व नु खलु बिभ्रति जीवनस्य योगम् ॥

---

१०२ । सजसेति ।—यस्याः पादे सजसेभ्यः गणेभ्यः परं जगौ निबद्धौ सा प्रबोधिता नाम वृत्तं भवति । प्रबोधितामञ्जुभाषिण्योर्लक्षणत एकत्वेऽपि नामभेदात् पृथगुक्ति-रिति ज्ञेयम् । एवमुक्तिरन्यत्रापि दृश्यते, यथा वृत्तरत्नाकरतत्परिशिष्टयोः उपस्थित-प्रचुपितयोः चमा-विद्युतोः श्रीमौक्तिकमालयोः चित्रलेखातिशायिन्योश्चेति ।

ग्रथितेति । मृषा मिथ्या चटुला चञ्चला या माननिद्रा तया हेतुना रतिकेलिकुञ्ज-निलये ग्रथिता विलासिनी काचिद् गोपरमणी, सुररिपुणा श्रीकृष्णेन श्रवणखर्ज्जनादिना कर्णकण्डूयनादिना सपदि सद्यः प्रबोधिता सती स्मितम् ईषद्धासम् आततान मानम् अमुञ्चदिति भावः ।

---

১০১। যে ছন্দে প্রতিপাদে ক্রমে একটী "স" একটী "জ" দুইটী "স" ও একটী "গ" গণ থাকে, তাহা 'কলহংস' নামে কথিত হয়।

১০২। যে ছন্দে প্রতিপাদে ক্রমে একটী "স" একটী "জ" একটী "স" একটী "জ" ও একটী "গ" গণ থাকে, তাহা 'প্রবোধিতা' নামে কথিত হয়।

य म र र ग

१०४। यमौ रौ विख्याता "चञ्चरीकावली" गः।

न स र र ग

१०५। नसरयुगगैः "चन्द्ररेखा"-त्तुंलोकैः।

---

३। भवतीति।—यस्य पादे नजौ जरौ च गणौ ततो गकारः, तत् मृगेन्द्रमुखं नाम वृत्तं भवति।

गुरुभुजेति। मदेन गर्व्वेण अन्धाः मदान्धाः दानवाः दैत्याः, युधि युद्धे गुरुः महान् भुजवीर्य्यभरो भुजयोः सामर्थ्यातिशयो यस्य तं श्रीकृष्णं समुपेत्य सम्प्राप्य न जिजीवुः प्राणान् जहुरित्यर्थः। मृगाः पशवः क्षुधितमृगेन्द्रमुखं बुभुक्षितस्य सिंहस्य मुखम् उपेत्य क्व नु खलु जीवनस्य योगं सम्बन्धं बिभ्रति धारयन्ति म्रियन्त एवेत्यर्थः। अलङ्कारः प्रतिवस्तूपमा।

४। यमाविति।—यस्याः पादे यगणो-मगणौ रगणद्वयं तत एको गुरुश्च वर्त्तते, सा चञ्चरीकावली नाम वृत्तं विख्याता।

५। नसेति।—यस्याः पादे नगणः सगणः रगणद्वयम् एको गुरुश्च वर्त्तते, सा चन्द्ररेखा नाम वृत्तं भवति। अत्र षष्ठैः ततः सप्तमैश्चवर्णैर्यतिः कर्त्तव्या।

---

১০৩। যে ছন্দে প্রতিপাদে ক্রমশঃ একটী "ন" দুইটী "জ" একটী "র" ও একটী "গ" গণ থাকে, তাহা 'মৃগেন্দ্রমুখ' ছন্দ।

১০৪। যে ছন্দে প্রতিপাদে ক্রমশঃ একটী "য" একটী "ম" দুইটী "র" ও একটী গুরুবর্ণ থাকে, তাহা 'চঞ্চরীকাবলী' নামে কথিত হয়।

১০৫। যে ছন্দে প্রতিপাদে ক্রমে একটী "ন" একটী "স" দুইটী

१०६। "उपस्थित"मिदं ज्सौ तसौ यदि गुरुः स्यात् ।
१०७। जतौ सजौ गो भवति "मञ्जुहासिनी" ।
१०८। "कूटजगति"र्नजौ समन्तुमतौ गुरुः ।
१०९। इदं "कन्दुकं" यत्र येभ्यस्चतुर्भ्यो गः॥

इति वृत्तरत्नाकरपरिशिष्टे ।

---

२०६। उपेति । यदि जगणः सगणः तगणः सगणस्तत एको गुरुश्च क्रमात् वर्त्तते, तदा इदम् उपस्थितं नाम वृत्तं स्यात् ।

१०७। जताविति ।—यस्याः पादे क्रमेण जगणः तगणः सगणः जगणस्तत एको गुरुश्च वर्त्तते, सा मञ्जुहासिनी नाम वृत्तं भवति ।

१०८। कूटजेति ।—यस्याः पादे नगणात् जगणस्ततो भगणस्ततः तगणस्ततश्चैको गुरुर्वर्त्तते, सा कूटजगतिः कथ्यते, अत्र प्रथमतः सप्तमैः ततः षष्ठै रक्षरैर्यतिः कर्त्तव्या ।

१०९। इदमिति ।—यत्र वृत्ते चतुर्भ्यः यगणेभ्यः परम् एको गुरुर्वर्त्तते, इदं कन्दुकं नाम कथ्यते ।

---

"র" ও একটী "গ" গণ থাকে এবং প্রথম ষষ্ঠাক্ষরে ও পরে সপ্তমাক্ষরে যতি থাকে তাহাকে 'চন্দ্ররেখা' ছন্দ কহে।

১০৬। যে ছন্দের প্রতিপাদে ক্রমে এক একটী "জ" "স" "ত" ও "স" গণ এবং একটী গুরুবর্ণ থাকে, তাহা 'উপস্থিত' নামে কথিত হয়।

১০৭। যে ছন্দের প্রতিপাদে ক্রমশঃ এক একটী "জ" "ত" "স" "জ" ও "গ" গণ থাকে, তাহা 'মঞ্জুহাসিনী' নামে কথিত হয়।

১০৮। যে ছন্দে প্রতিপাদে ক্রমশঃ এক একটী "ন" "জ" "ম" "ত" ও "গ" গণ থাকে, এবং প্রথম ও সপ্তমাক্ষরে যতি হয়, তাহাকে 'কূটজগতি' কহে।

११०। एते क्रमात्तभसजसंज्ञका गणा
गस्त्वान्ततो यदि निहितो महीपते।
वेदैर्ग्रहैर्भवति यतिश्च शोभना
नागाधिपो वदति तदा "प्रभावतीम्" ॥

इति वृत्तरत्नावल्याम्।

---

शक्करी। ( चतुर्द्दशाक्षरा वृत्तिः )।

म ग ग न न म
१११। मो गौ नौ मश्चेच्छुरनवभि-"रसम्बाधा।"
S S S S S I I I I I I S S S
वीर्य्याग्नौ येन ज्वलति रणावशात् क्षिप्रे
दैत्येन्द्रे जाता धरणिरियमसम्बाधा।
धर्म्मस्थित्यर्थं प्रकटिततनुसम्बन्धः
साधूनां वाधां प्रशमयतु स कंसारिः ॥

---

११०। एत इति।—हे महीपते राजन्! यदि एते तभसजसंज्ञका गणाः क्रमात् भवन्ति, एषामन्ततश्च एको गुरुर्निहितः स्थापितः स्यात्, परन्तु वेदैश्चतुर्भिः ग्रहैर्नवमैश्च अक्षरैः शोभना सुश्रवा यतिश्च भवति, तदा नागाधिपः पिङ्गलः प्रभावतीं नाम वृत्तं वदति कथयति।

---

১০৯। যে ছন্দে প্রতিপাদে প্রথম চারিটী "য" গণ পরে একটী "গ" গণ থাকে, তাহা 'কন্দুক' ছন্দ।

১১০। যদি প্রতিপাদে ক্রমশঃ এক একটী "ত" "ভ" "স" "জ" ও "গ" গণ থাকে, এবং প্রথম চতুর্থাক্ষরে পরে নবমাক্ষরে যতি থাকে, তবে পিঙ্গলাচার্য্য সেই ছন্দকে 'প্রভাবতী' বলিয়া থাকেন।

त　भ　ज　ज ग ग

११२ । ज्ञेयं "वसन्ततिलकं" तभजा जगौ गः ।

ऽ ऽ । ऽ । । । ऽ । । ऽ । ऽ ऽ

फुल्लं वसन्ततिलकं तिलकं वनाल्या-

लीलापरं पिककुलं कलमत्र रौति ।

वात्येष पुष्पसुरभिर्मलयाद्रिवातो

यातो हरिः स मथुरां विधिना हताः स्मः ॥

सिंहोन्नता क्वापि ।

---

१११ । म इति ।—यस्याः पादे आदौ मगणस्तदनन्तरं गुरुद्वयं ततो नगणद्वयं ततश्च मगणः स्यात्, पञ्चमैः नवमैश्च अक्षरैः कृतयतिः सा असम्बाधा नाम वृत्तं स्यात् ।

उदाहरणं—वीर्य्याग्नाविति ।—येन ( श्रीकृष्णेन ) रणवशात् युद्धकरणात् ज्वलति दीप्यमाने वीर्य्यं सामर्थ्यमेव अग्निः तस्मिन् दैत्येन्द्रे कंसे चिरं पातिते सति निहते इति भावः । इयं धरणी असम्बाधा निरुपद्रवा जाता सुस्था बभूवेत्यर्थः । धर्म्मस्थित्यर्थं धर्म्मरक्षार्थं प्रकटितः अवलम्बितः तनुसम्बन्धः शरीरपरिग्रहः येन तादृशः सः कंसारिः श्रीकृष्णः साधूनां बाधां विघ्नं प्रशमयतु निवारयतु ।

११२ । ज्ञेयमिति ।—यत्र तगणो भगणो जगणद्वयं गुरुयुगलञ्च क्रमेण वर्त्तते, तत् वसन्ततिलकं नाम ज्ञेयम् । वसन्ततिलका उद्धर्षिणी सिंहोन्नताप्यस्य संज्ञाभेदः ।

---

## शक्करी । ( চতুর্দ্দশাক্ষরা বৃত্তি ) ।

১১১ । যে ছন্দে প্রতিপাদে ক্রমশঃ একটি "ম" দুইটি "গ" দুইটি "ন" গণ থাকে, এবং প্রথমতঃ পঞ্চমাক্ষরে পরে নবমাক্ষরে যতি থাকে, তাহাকে 'অসম্বাধা' ছন্দ কহে ।

न न र स ल ग

## ११२। ननरसलघुगैः स्वरै-"रपराजिता"।

।।।। ।। ऽ ।ऽ।। ऽ। ऽ

यदनवधिभुजप्रतापकृतास्पदा यदुनिचयचमूः परैरपराजिता।
व्यजयत समरे समस्तरिपुव्रजं स जयति जगतां गतिर्गरुड़ध्वजः॥

---

उदाहरणं—फुल्लमिति।—वनाल्याः वनश्रेण्याः, स्त्रिया इव इति ध्वनिः। तिलकं विशेषकस्वरूपम्, "तमालपत्रतिलकचित्रकाणि विशेषकम्" इत्यमरः। वसन्ततिलकं वसन्तस्य ऋतुराजस्य तिलपुष्पं फुल्लं विकसितम्। अत्र वसन्तसमये लीलापरं क्रीड़ासक्तं पिककुलं कोकिलवृन्दं कलमव्यक्तमधुरं रौति कूजति। पुष्पसुरभिः पुष्पसौगन्ध्यशाली एष मलयाद्रिवातः मलयाचलसम्पृक्तो वायुः वाति, किन्तु स हरिः कान्तः श्रीकृष्णः मथुरां यातः गतः, अतः विधिना दैवेन हताः स्मः पीड़िता भवामः, वयमिति शेषः। वृन्दावनात् श्रीकृष्णे मथुरां प्रयाते व्रजयोषितामुक्तिरियम्।

११२। ननेति।—यस्याः पादः ननरसलघुगैरक्षरैर्निबद्धः सा अपराजिता नाम वृत्तम्भवति, अत्र स्वरैः सप्तमैरक्षरैर्यतिः कर्त्तव्या।

उदाहरणं यदिति।—यस्य ( गरुड़ध्वजस्य ) नास्ति अवधिः सीमा यस्य तथाविधे भुजप्रतापे कृतास्पदा कृतप्रतिष्ठा अवस्थिता इत्यर्थः। अतएव परैः शत्रुभिः अपराजिता अनभिभूता यदुनिचयचमूः यादवकुलसेना समरे युद्धे समस्तरिपुव्रजं निखिलशत्रुकुलं व्यजयत पराभूतवती जगतां त्रिभुवनानां गतिः अवलम्बनं सः गरुड़ध्वजः श्रीकृष्णः जयति सर्व्वोत्कर्षेण वर्त्तते।

---

১১২। যে ছন্দে প্রতিপাদে ক্রমশঃ একটি "ত" একটি 'ভ' দুইটি "জ" ও দুইটি "গ" গণ থাকে, তাহাকে 'বসন্ততিলক' বলিয়া জানিবে।

न　न　भ　न　लगि

११४। ननभनलगिति "प्रहरणकलिका"।

। । ।　। । ।　ऽ । । । । । । ऽ

व्यथयति कुसुमप्रहरण कलिका प्रमदवनभवा तव धनुषि तता ।
विरहविपदि मे शरणमिह ततो मधुमथनगुणस्मरणमविरतम् ॥

---

११४। ननभेति।—ननभनलगिति समाहारद्वन्द्वः। तस्मिन् निबद्धे सति प्रहरणकलिका इति कथ्यते। लक्षणे ननभनलग् प्रथमैकवचनान्तम्।

व्यथयतीति।—कुसुमानि प्रहरणानि वाणा यस्य तत्सम्बोधने हे कुसुमप्रहरण! पुष्पेषो! तव धनुषि चापे तता आरोपिता प्रमदाया वनं प्रमदवनम्। समासे आकारह्रस्वः। अन्तःपुरोचितवनं "तदेव राज्ञः प्रमदवनमन्तःपुरोचितम्।" इत्य-मरः। तद्भवा तज्जाता कलिका कोरकः व्यथयति मामिति शेषः। ततस्तस्मात् हेतोः इह उपस्थितायां विरहविपदि अविरतं सततं मधुं दैत्यविशेषं मथितवानिति मधुमथनः श्रीकृष्णः तस्य गुणानां स्मरणं चिन्तनमेव मे मम शरणं रक्षयकर्त्तृ। विरह-विधुरायाः कस्याश्चित् व्रजाङ्गनाया भङ्गिरियम्। "शरणं गृहरक्षित्रोः" इत्यमरः।

---

১১৩। যে ছন্দে প্রতিপাদে ক্রমশঃ দুইটি "ন" একটী 'র' একটী 'স' তৎপর একটী লঘু ও একটী গুরু থাকে, এবং সপ্তমাক্ষরে যতি থাকে, তাহাকে 'অপরাজিতা' কহে।

১১৪। যে ছন্দে প্রতিপাদে ক্রমশঃ দুইটী "ন" একটী "ভ" একটী "ন" একটি "ল" ও একটি 'গ' গণ থাকে, তাহা "প্রহরণ-কলিকা" নামে অভিহিত হয়।

म त न म ग ग

११५। मात्तौ नो मो गौ यदि गदिता "वासन्तीयम्"।

ऽ ऽऽऽऽ ।।।। ऽऽऽ ऽ ऽ

भ्राम्यद्भृङ्गीनिर्भरमधुरालापोद्गीतैः
श्रीखण्डाद्रेरङ्गुतपवनैर्मन्दान्दोला।
लीलालोला पल्लवविलसद्धस्तोल्लासैः
कंसारातौ नृत्यति सदृशी वासन्तीयम्॥

म स म भ ग ग

११६। द्विः सप्तच्छिदि "लोला"म्सौ म्भौ गौ चरणे चेत्।

ऽऽ ऽ।।ऽऽ ऽऽऽ।।ऽऽ

मुग्धे यौवनलक्ष्मीविद्युद्विभ्रमलोला
त्रैलोक्याद्भुतरूपो गोविन्दोऽतिदुरापः।

---

११५। मादिति।—यदि मगणात् परं तगणः तदनु नगणः तदनु मगणः तदनु च गुरुद्वयं वर्त्तते तदा इयं वासन्ती गदिता उक्ता।

भ्राम्यदिति।—कंसस्य अरातिः रिपुः तस्मिन् श्रीकृष्णे नृत्यति सति श्रीखण्डाद्रेः मलयाचलस्य अङ्गुतपवनैः अपूर्व्वानिलैः मन्दान्दोला ईषत्कम्पिता पल्लवेषु किसलयेषु विलसन्तः स्फुरन्तः ये हस्तोल्लासा भुजलताः तैः उपलक्षिता अतएव लीलालोला विलासचपला। भ्राम्यन्तीनाम् इतस्ततो धावन्तीनां भृङ्गीणां भ्रमरीणां निर्भराः अतिमात्राः ये मधुरालापाः ते एव उद्गीतानि उच्चैर्गानानि तैः उपलक्षिता इयं वासन्ती माधवीलता, "वासन्ती माधवीलते"त्यमरः। सदृशी अभूत्, नृत्यता श्रीकृष्णेन समं अनृत्यत् इत्यर्थः। नर्त्तनसमये श्रीकृष्णो यथा अभूत् माधवीलतापि तथा अभूत्।

---

১১৫। যাহার প্রতিপাদে ক্রমশঃ এক একটী "ম" "ত" "ন" "ম" ও দুইটী "গ" গণ থাকে, তাহাকে 'বাসন্তী' ছন্দ কহে।

तद्वृन्दावनकुञ्जे गुञ्जद्भृङ्गसनाथे
श्रीनाथेन समेता स्वच्छन्दं कुरु केलिम् ॥

न　न　त　तग　ग

११७। स्वरभिदि यदि नौ तौ च "नान्दीमुखी" गौ।

। । । ।। । । ऽ ऽ । ऽ ऽ । ऽ ऽ

सरसखगकुलालापनान्दीमुखीयं लहरिभुजलया चारुफेनस्मितश्रीः।
मुरहर कलयासत्तिमासाद्य किन्ते प्रमुदितहृदया भानुजा नृत्यतीह ॥

---

११६। द्विरिति।—चेत् यदि द्विः सप्तच्छिदि सप्तमैः सप्तभिः अक्षरैः विच्छिन्नं कृतयताविलर्थः। चरणे पादे मसमभगणास्तदनु गुरुद्वयञ्च, तदा लोला नाम वृत्तं स्यात्।

मुग्धे इति।—हे मुग्धे ! यौवनलक्ष्मीः यौवनश्रीः विद्युद्विभ्रमवत् विद्युतस्फुरणवत् लोला अस्थिरा परन्तु त्रैलोक्याद्भुतरूपः त्रिभुवनाद्वितीयसुन्दरः गोविन्दः श्रीकृष्णः दुरापः दुर्लभः। तत् तस्मात् गुञ्जद्भृङ्गसनाथे गुञ्जद्भिर्भ्रमरैर्युक्ते वृन्दावनस्थलतागृहे श्रीनाथेन श्रीकृष्णेन समेता सङ्गता सती स्वच्छन्दम् अतिनावं केलिं क्रीड़ां कुरु।

११७। स्वरेति।—स्वरभिदि सप्तभिर्विच्छेदे सति यदि नौ तौ च गणौ एवं गुरुद्वयञ्च, तदा नान्दीमुखी नाम वृत्तं स्यात्।

सरसेति।—हे मुरहर श्रीकृष्ण ! रसेन अनुरागेण सह वर्त्तमानाः सरसाः तेषां खगकुलानां पक्षिगणानाम् आलापः कूजनमेव नान्दी मङ्गलस्तुतिः सैव मुखं नर्त्तनारम्भो यस्यां सा। चारुफेनस्मितश्रीः ईषद्धासश्शोभा यस्याः सा लहर्य्यस्तरङ्गा एव भुजलया हस्तलया यस्याः सा, इयं भानुजा यमुना, ते तव आसत्तिं सन्निधानम् आसाद्य लब्ध्वा प्रमुदितहृदया प्रफुल्लान्तःकरणा इह नृत्यति किम् ? कलय अवलोकय।

---

১১৬। যাহার প্রতিপাদে ক্রমশঃ এক একটী 'ম' 'স' 'ম' 'ভ' ও দুইটি 'গ' গণ থাকে, এবং সপ্তমাক্ষরে যতি থাকে, তাহাকে "লোলা" ছন্দ কহে।

ভ জ স ন গ গ

১১৮। "ইন্দুবদনা" ভজসনৈঃ সগুরুযুগ্মৈঃ।

ইতি ইন্দুবদনা।

১১৯। ননতজগুরুগৈঃ সপ্তযতি"নদী" স্যাৎ।

১২০। "লক্ষ্মী"-রত্নবিরামা মসৌ তনৌ গুরুযুগ্মম্।

১২১। ভিননগগিতি বসুযতি "সুপবিত্রম্"।

---

১১৮।—পরস্থিতগুরুযুগলসহিতৈর্ভজসনগণৈর্নিবদ্ধা ইন্দুবদনা নাম বৃত্তং স্যাৎ।

১১৯।—পরবর্ত্তিগুরুযুগলসহিতৈর্ননতজগণৈর্নিবদ্ধা নদী নাম বৃত্তং স্যাৎ। অত্র সপ্তমাক্ষরৈর্যতিঃ কর্ত্তব্যা।

১২০।—পরবর্ত্তিগুরুযুগলসহিতৈঃ মসতনগণৈর্নিবদ্ধা লক্ষ্মীর্নাম বৃত্তং স্যাৎ। অত্রাপি সপ্তমাক্ষরৈঃ যতিঃ কর্ত্তব্যা।

---

১১৭। যদি প্রতিপাদে ক্রমশঃ দুইটী 'ন' দুইটী 'ত' ও দুইটী "গ" গণ থাকে এবং সপ্তমাক্ষরে যতি থাকে, তবে তাহাকে "নান্দীমুখী" ছন্দ কহে।

১১৮। যাহার প্রতিপাদে ক্রমে "ভ" "জ" "স" "ন" গণ ও দুইটি গুরুবর্ণ থাকে, তাহাকে "ইন্দুবদনা" কহে।

১১৯। যাহার প্রতিপাদে ক্রমে দুইটি "ন" একটি "ত" একটি "জ" ও দুইটি গুরুবর্ণ থাকে এবং সপ্তমাক্ষরে যতি থাকে, তাহা "নদী" ছন্দ হইবে।

১২০। প্রতিপাদে ক্রমে এক একটি "ম" "স" "ত" "ন" গণ ও দুইটী গুরুবর্ণ থাকিলে এবং সপ্তমাক্ষরে যতি থাকিলে "লক্ষ্মী" ছন্দ হয়।

१२२ । "मध्यक्षामा" युगदशविरमा म्भौ न्यौ गौ ।

१२३ । युगदिग्भिः "कुटिल"-मिति सभौ न्यौ गौ चेत् ।

१२४ । नजभजला गुरुश्च भवति "प्रमदा ।"

---

१२१ ।—नकारचतुष्टयं गुरुद्वयञ्च यस्य पादे वर्त्तते, तत् सुपवित्रं नाम वृत्तम् । अत्राष्टमाक्षरे यतिः कर्त्तव्या । नयायां नानां समाहारः त्रिनं त्रिनञ्च नञ्च गञ्च गञ्च त्रिननगग् तत तदिति ।

१२२ ।—यत्र मभनयाः गणाः गुरुद्वयञ्च सा मध्यक्षामा नाम वृत्तं स्यात् । अत्र चतुर्थे ततो दशमे यतिः कर्त्तव्या ।

१२३ ।—सभनयगुरुद्वयनिबद्धं कुटिलं नाम वृत्तं स्यात् । यतिरत्र पूर्व्ववत् कर्त्तव्या ।

१२४ ।—यत्र नजभजाः गणाः लकारो गकारश्च क्रमात् स्युः, सा प्रमदा नाम वृत्तं भवति ।

---

১২১। যাহার প্রতিপাদে ক্রমশঃ চারিটী "ন" ও দুইটী "গ" গণ এবং অষ্টমাক্ষরে যতি থাকে, তাহা "সুপবিত্র" নামে কথিত হয়।

১২২। যাহার প্রতিপাদে ক্রমশঃ একটী "ম" একটি "ভ" একটি "ন" একটি "য" ও দুইটী "গ" গণ থাকে এবং প্রথমতঃ চতুর্থাক্ষরে ও পরে দশমাক্ষরে যতি থাকে, তাহাকে "মধ্যক্ষামা" ছন্দ কহে।

১২৩। প্রতিপাদে ক্রমশঃ এক একটী "স" "ভ" "ন" "য" ও দুইটী "গ" গণ এবং প্রথমতঃ চতুর্থাক্ষরে ও পরে দশমাক্ষরে যতি থাকিলে "কুটিল" ছন্দ হয়।

১২৪। যাহার প্রতিপাদে ক্রমশঃ এক একটী "ন" "জ" "ভ" "জ" "ল" ও "গ" গণ থাকে, তাহা "প্রমদা" ছন্দ।

১২৫। সজসা যলৌ গিতি মবগ্রহৈ"মঞ্জরী"।

১২৬। নজভজগৈর্গু রুশ্চ বসুষট্ "কুমারী"।

১২৭। নরনরৈর্লগৌ চ রচিতং "সুকেসরম্"।

১২৮। ম্ভৌ ন্যৌ ল্গৌ চেদিহ ভবতি চ "চন্দ্রৌরসঃ"।

১২৯। "বাসন্তীয়ং" স্যাদিহ খলু মতৌ ন্যৌ গৌ চেৎ।

---

১২৫।—সজসযা গণা লকারো গকারশ্চ যত্র স্যুঃ, সা মঞ্জরী নাম। অত্র পঞ্চমে ততো নবমে যতিঃ।

১২৬।—যত্র নজভজা গণা গুরুদ্বয়ঞ্চ সা কুমারী নাম। অত্র অষ্টমে ততঃ ষষ্ঠে যতিঃ কর্ত্তব্যা।

১২৭।—যত্র নরনরা গণা লগৌ চ তৎ সুকেসরং নাম।

১২৮।—যত্র মভনযা গণা লগৌ চ, স চন্দ্রৌরসঃ।

১২৯।—চেৎ যদি মতনযা গণা গুরুদ্বয়ঞ্চ, তদা ইয়ং বাসন্তী নাম।

---

১২৫। যাহার প্রতিপাদে ক্রমশঃ এক একটী "স" "জ" "স" "য" "ল" ও "গ" গণ থাকে এবং প্রথমতঃ পঞ্চমাক্ষরে পরে নবমাক্ষরে যতি থাকে, তাহাকে "মঞ্জরী" ছন্দ কহে।

১২৬। যাহার প্রতিপাদে ক্রমশঃ একটী করিয়া "ন" "জ" "ভ" "জ" গণ ও পরে দুইটী গুরুবর্ণ থাকিবে, এবং প্রথমতঃ অষ্টমাক্ষরে পরে ষষ্ঠাক্ষরে যতি থাকিবে, তাহাকে "কুমারী" ছন্দ কহে।

১২৭। যাহার প্রতিপাদে ক্রমশঃ "ন" "র" "ন" "র" "ল" ও "গ"—এই গণগুলি থাকিবে, তাহা "সুকেসর" ছন্দ।

১২৮। প্রতিপাদে যথাক্রমে 'ম' 'ভ' 'ন' 'য' 'ল' 'গ' গণ থাকিলে 'চন্দ্রৌরস' ছন্দ হয়।

१३० । "चक्रपद"-मिह भनननलगुरुभिः ।

इति वृत्तरत्नाकरपरिशिष्टे ।

—*—

अतिशक्करी । ( पञ्चदशाक्षरा वृत्तिः )

१३१ । गुरुनिधनमनुलघु रिह "शशिकला" ।

। । । । । । । । । । । । । । ऽ

मलयजतिलकसमुदितशशिकला व्रजयुवतिलसदलिकगगनगता ।
सरसिजनयनहृदयसलिलनिधिं व्यतनुत विततरभसपरितरलम् ॥

---

१३० ।—यत्र भनननगणाः लकारो गकारश्च, तत् चक्रपदं नाम ।

१३१ । गुर्विति ।—इह छन्दोग्रन्थे गुरुः गुरुवर्णः निधने अन्ते यस्याः सा गुरुनिधना मनवश्चतुर्द्दशवर्णा लघवः यत्र, सा मनुलघुः ततः कर्म्मधारये पूर्व्वपदं कृत्वा-न्तम् । ईदृशं शशिकला नाम वृत्तं स्यात् ।

मलयेति ।—व्रजयुवतीनां गोपानां लसत् रमणीयं यत् अलिकं ललाटस्थानं तदेव गगनम् आकाशमण्डलं तद्गता प्राप्ताः, 'ललाटमलिकं गोधि'रित्यमरः । मलयजतिलकं चन्दनरचिततिलकमेव समुदितशशिकला शोभमानचन्द्रखण्डम् । सरसिजनयनस्य पुण्डरीकाक्षस्य श्रीकृष्णस्य हृदयसलिलनिधिं मानससागरं विततरभसेन प्रबलवेगेन परितरलं सातिशयचञ्चलं व्यतनुत अकरोत् । रूपकमलङ्कारः ।

---

১২৯। প্রতিপাদে যথাক্রমে 'ম' 'ত' 'ন' 'য' ও দুইটী 'গ' গণ থাকিলে "বাসন্তী" ছন্দ হয়।

১৩০। প্রতিপাদে যথাক্রমে একটী 'ভ', তিনটী 'ন', একটী 'ল' ও একটী গুরুবর্ণ থাকিলে "চক্রপদ" ছন্দ হয়।

অতিশর্করী ( পঞ্চদশাক্ষরা )

১৩১। যে ছন্দে চতুর্দ্দশটী অক্ষর লঘু এবং অন্তের একটী মাত্র অক্ষর গুরু, তাহা "শশিকলা" ছন্দঃ।

१३२। "स्रगियं"मपि च रसनवरचितयतिः।

। । । । । । । । । । । । । । ऽ

अयि सहचरि रुचिरतरगुणमयी म्रदिमवसतिरनपगतपरिमला।
स्रगिव निवस विलसदनुपमरसा सुमुखि मुदितदनुजदलनहृदये॥

१३३। वसुमुनियतिरिति "मणिगुणनिकरः"।

। । । । । । । । । । । । । । ऽ

नरकरिपुरवतु निखिलसुरगतिः प्रमितमहिमभरसहजनिवसतिः।
अनवधिमणिगुणनिकरपरिचितः सरिदधिपतिरिव धृततनुविभवः॥

---

१३२। स्रगिति।—इयं शशिकला नाम वृत्तमपि रसनवरचितयतिः षड्भिः नवभिश्च अक्षरैः कृतविरामा सती स्रक् नाम वृत्तं भवति।

अयीति।—अयि सहचरि! सुमुखि! रुचिरतरगुणमयी अतिमनोज्ञलावण्यमयी अतिमनोज्ञसूत्रमयी च म्रदिम्नः मृदुलस्य। मृदुशब्दात् भावे इमन्। वसतिः वासस्थानम्, अनपगतपरिमला न अपगतः परिमलः सौरभं यस्याः अभुक्तयौवना अपर्य्युषिता च, 'स्यात् परिमलोऽतिमर्द्दितमनोहरगन्धयोश्चापि। सुरतोपमर्द्दविकसच्छरीररागादि सौरभे पुंसी'ति मेदिनी। विलसन् शोभमानः अनुपमः उपमारहितः रसः अनुरागः मधु च यस्याः सा तादृशी त्वं स्रगिव माला इव मुदितस्य सन्तुष्टस्य दनुजान् दैत्यान् दलयति विनाशयति यः सः दनुजदलनः श्रीकृष्णः तस्य हृदये वक्षसि निवस तिष्ठ पूर्णोपमालङ्कारः।

१३३। वसुमुनीति।—शशिकला एव वसुमुनियतिः अष्टभिर्नवभिश्च अक्षरैः कृतविरामा सती मणिगुणनिकरो नाम वृत्तं स्यात्।

---

১৩২। শশিকলা ছন্দের লঘুগুরু নিয়ম থাকিয়া যদি প্রথম ছয় অক্ষরের পরে নবাক্ষরে যতি হয়, তবে তাহা "স্রক্" ছন্দ হইবে।

न न म य य

१३४। ननमयययुतेयं "मालिनी" भोगिलोकैः।

। । । । । । ऽऽ ऽ । ऽऽ । ऽऽ

मृगमदकृतचर्च्चा पीतकौषेयवासा
रुचिरशिखिशिखण्डावद्धधम्मिल्लपाशा।
अनृजु निहितमंसे वंशमुत्क्वाणयन्ती
धृतमधुरिपुलीला मालिनी पातु राधा॥

---

नरकेति।—निखिलसुराणां गतिः आश्रयस्वरूपः, प्रमितः अपरिमितः यो महिम-भरः महत्त्वातिशयः तस्य सहजा स्वाभाविकी निवसतिः अधिष्ठानम्। नास्ति अवधिः इयत्ता येषां ते अनवधयः, तादृशानां मणीनां रत्नानां गुणाः शुक्लादिवर्णास्तेषां निचयैः समूहैः परिचितः विदितः नानावर्णमणिभिः समुद्भासित इत्यर्थः। एतत् सर्व्वं विशेषणं समुद्रपक्षेऽपि प्रयोज्यम्। सरिदधिपतिः समुद्र इव धृततनुविभवः धृतः गृहीतः तनुविभवः शरीरवैभवं येन तादृशः नरकरिपुः नरकासुरहन्ता निरयनिवारकश्च श्रीकृष्णः, अवतु रक्षतु युष्मान् अस्मान् वा इति शेषः। अलङ्कार उपमा।

१३४। ननमेति।—भोगिभिरष्टभिः, लोकैः सप्तभिश्च अक्षरैर्विच्छिन्ना ननमयययगण-निबद्धा इयं मालिनी नाम वृत्तम्भवेत्।

मृगमदेति।—मृगमदेन कस्तूरिकया कृता चर्च्चा अङ्गरागो यया तथोक्ता, पीतं हरिद्राभं कौषेयवासः, कृमिकोषतन्तुनिर्म्मितं वसनं यस्याः सा, रुचिराणि मनोहराणि यानि शिखिशिखण्डानि मयूरपिच्छानि तैः आवद्धः वेष्टितः धम्मिल्लपाशः संयतः केश-कलापः यस्याः सा, मालिनी स्रग्विणी, न ऋजु अनृजु वक्रं तत् यथा स्यात् तथा अंसे

---

১৩৩। উক্ত শশিকলাছন্দের লঘুগুরুনিয়মসত্ত্বে যদি অষ্টমাক্ষরে পরে সপ্তমাক্ষরে যতি থাকে, তবে তাহা 'মুনিগণনিকর' নামে কথিত হয়।

म म म म म

१३५। एकन्यूनौ विद्युन्मालापादौ चेत् "लीलाखेलः"।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

पायाद्वो गोविन्दः कालिन्दीकूलचौणीचक्रे
रासोल्लासक्रीड़द्गोपीभिः सार्द्धं लीलाखेलः।
मन्दाकिन्यास्तीरोपान्ते खैरक्रीड़ाभिर्लीला
यद्वद्देवानामीशः सर्व्वैश्चाभिः खेलन्तीभिः॥
सा कान्ते पद्यस्यान्ते पर्य्याकाशे देशे स्वापौः
कान्तं वक्त्रं वृत्तं पूर्णं चन्द्रं मत्वा रात्रौ चेत्।
चुत्चामः प्राटंश्चेतश्चेतो राहुः क्रूरः प्राद्यात्
तस्माद्भ्रान्ते हर्म्म्यस्यान्ते शय्यैकान्ते कर्त्तव्या॥

इति कण्ठाभरणः।

---

लग्नं निहितं स्थापितं वंशं वेणुम् उत्क्वाणयन्ती उच्चैर्व्वादयन्ती अतएव धृतमधुरिपुलीला गृहीतश्रीकृष्णविलासा राधा पातु रक्षतु युष्मान् अस्मान् वा इति शेषः।

१३५। एकेति।—पूर्व्वोक्तसर्व्वदीर्घाष्टाक्षरपादघटिता विद्युन्माला, अस्या द्वौ पादौ एकन्यूनौ एकाक्षरहीनौ चेत्, लीलाखेलः स्यात्, लीलाखेलनामवृत्तस्य पादः दीर्घपञ्चदशाक्षरघटितः स्यादिति हृदयम्।

उदाहरणं—पायाद्व इति।—कालिन्दीकूलचौणीचक्रे कालिन्दी यमुना, तस्याः कूले तीरे यत् चौणीचक्रं वलयीभूतभूप्रदेशः तस्मिन् रासोल्लासः रासरभसः क्रीड़न्त्यः विहरन्त्यः याः गोप्यः गोपाङ्गनाः ताभिः सार्द्धं सह लीलाखेला यस्य तथाभूतः विलास-

---

১৩৪। প্রতিপাদে যথাক্রমে 'ন' 'ন' 'ম' 'য' 'য'—এই গণগুলি থাকিলে এবং প্রথমতঃ অষ্টমাক্ষরে ও পরে সপ্তমাক্ষরে যতি থাকিলে "মালিনী" ছন্দ হয়।

न　स　न　र　र

१३६ । "विपिनतिलकं" नसनरेफयुग्मं भवेत् ।

विपिनतिलकं विकसितं वसन्तागमे
मधुकृतमदैर्मधुकरैः क्वणन्निवृतम ।
मलयमरुता रचितलास्यमालोकयन्
व्रजयुवतिभिर्विहरति स्म मुग्धो हरिः ॥

---

सुभगः वेशमनोहरः अतएव मन्दाकिन्याः स्वर्गगङ्गायाः तीरोपान्ते तटभूमौ स्वैर-क्रीड़ाभिः स्वच्छन्दविलासैः खेलन्तीभिः क्रीड़न्तीभिः सर्व्वेश्याभिः अप्सराभिः लालः विलासचञ्चलः देवानामीशः सुरराजः यद्वत् इन्द्र इव, गोविन्दः श्रीकृष्णः वो युष्मान् पायात् रक्षतु । अलङ्कृतिरियमुपमा ।

अन्यच्च मा कान्त इति ।—हे कान्ते ! प्रिये ! पक्षस्य शुक्लपक्षस्य अन्ते पौर्णमास्यान्तिथावित्यर्थः । रात्रौ पर्य्याकाशे परि समन्ततः आकाशे अनावृतस्थाने इत्यर्थः । मा स्वाप्सीः शयनं न कुर्व्वित्यर्थः । शयननिषेधे कारणमाह—कान्तमित्यादि । चेत् यदि क्षुत्क्षामः क्षुधया क्षीणः क्रूरः दुष्टग्रहो राहुः सैंहिकेयः इतश्च इतश्च दिशि दिशि प्राटन् भ्रमन् सन् कान्तं मनोरमं वृत्तं वर्त्तुलं वक्त्रं तव मुखमित्यर्थः । पूर्णं चन्द्रं मत्वा मनसि कृत्वा प्राद्यात् ग्रसेत् । तस्मात् हेतोः हर्म्म्यस्यान्ते प्रासादाभ्यन्तरे ध्वान्ते अन्धकारे एकान्ते निर्ज्जने शय्या कर्त्तव्या शयनं विधातव्यम् । रिरंसोः कस्यचित् नायकस्य उक्तिरियम् । श्रुतं गुरुमुखात् श्लोकस्यास्य समनानेन षष्टिवारपठने एकदण्ड-समयो भवतीति ।

---

১৩৫। বিদ্যুন্মালা ছন্দের দুই চরণ একটী অক্ষর কম হইলে যেরূপ হয় সেইরূপ একপাদ হইলে ( অর্থাৎ যে ছন্দের প্রতিপাদ দীর্ঘপঞ্চদশাক্ষরমাত্রঘটি ও ), উক্ত ছন্দকে 'লীলাখেল' কহে ।

र ज र ज र

१२७। "तूणकं" समानिकापदद्वयं विनान्तिमम्।

ऽ। ऽ। ऽ। ऽ। ऽ। ऽ। ऽ। ऽ

सा सुवर्णकेतकं विकाशि भृङ्गपूरितं
पञ्चबाणबाणजालपूर्णहेमतूणकम्।
राधिका वितर्क्य माधवाद्यमासि माधवे
मोहमेति निर्भरं त्वया विना कलानिधे॥

---

१२६। विपिनेति।—नसनरेफयुग्मै र्गणैः यस्य पादौ ग्रथितौ भवेत्, तत् विपिनतिलकं नाम वृत्तं भवेत्।

उदाहरति—विपिनेति।—मुग्धः मनोरमः हरिः श्रीकृष्णः, वसन्तागमे वसन्तऋतूदये विकसितं प्रफुल्लं मधुना पुष्परसेन कृतः उत्पादितः मदो मत्तता येषां तादृशैः अथवा मधुना वसन्तऋतुना कृतो मदो येषां तैः। क्वणद्भिः झङ्कारध्वनिं कुर्व्वद्भिः मधुकरैः मधुपैः वृतं व्याप्तं मलयमरुता मलयाचलवायुना रचितं कारितं लास्यं नृत्यं यस्य विपिनतिलकं वनतिलककुसुमम् आलोकयन् पश्यन् सन् व्रजयुवतिभिः सह विहरति स्म विहारं कृतवान्।

१२७। तूणकमिति।—"ग्लो रजौ समानिका तु" इति समानिकालक्षणं पूर्व्वमभिहितम्। तत्समानिकापदद्वयं अन्तिमाक्षरं विना स्थितं सत् यस्य एकः पादो भवति इति निर्गलितार्थः।

उदाहरति—सा सुवर्णेति।—हे कलानिधे! कलाः नृत्यादिचतुःषष्टिविद्याः तासां निधिः पात्रं तन्निपुण इत्यर्थः, तत्सम्बोधनम्। हे माधव! श्रीकृष्ण! सा गोपी राधिका इत्यर्थः। अद्य माधवे वैशाखे मासि। "वैशाखे माधवो राधः" इत्यमरः।

---

১২৬। যাহার প্রতিপাদে যথাক্রমে 'ন' 'স' ন' এবং দুইটী 'র' গণ থাকে, তাহা "বিপিনতিলক" ছন্দঃ।

म　र　म　य　य

१३८। म्रौ मो यौ चेद्भवेयुः सप्ताष्टकै-"चन्द्रलेखा ।"

ऽ ऽऽ ऽ।ऽ ऽ ऽ ऽ ऽ। ऽ।ऽ ऽ

विच्छेदे ते मुरारे पाण्डुप्रकाशा कृशाङ्गी
म्लानच्छायं दुकूलं न भ्राजते बिभ्रती सा।
राधाम्भोदस्य गर्भे लीना यथा चन्द्रलेखा
किन्त्वार्त्ता त्वां स्मरन्ती धत्ते ध्रुवं जीवयोगम् ॥

---

विकाशि प्रस्फुटितं भृङ्गपूरितं भ्रमरव्याप्तं सुवर्णकेतकं तदाख्यकुसुमं पञ्चबाणस्य कामदेवस्य बाणजालैः शरसमूहैः पूर्णं हेमतूणकं हेममयतूणीरं वितर्क्य विविच्य त्वया विना विरहेण इत्यर्थः, निर्भरं सातिशयं मोहं मूर्च्छां एति प्राप्नोति। उत्प्रेक्षालङ्कारः।

१३८। म्राविति।—मगणो रगणो मगणो यगणद्वयञ्च यदि एते क्रमाद्भवेयुः, तदा सप्तभिरष्टभिश्चाक्षरैर्विच्छिन्ना चन्द्रलेखा नाम वृत्तं भवेत्।

उदाहरणं—विच्छेद इति।—हे मुरारे ! ते तव विच्छेदे विरहे कृशाङ्गी क्षीणशरीरा, पाण्डुप्रकाशा पाण्डुवर्णा सा राधा, म्लाना मलिना छाया कान्तिर्यस्य तथाभूतं दुकूलं क्षौमवस्त्रं बिभ्रती परिदधती अम्भोदस्य मेघस्य गर्भे अन्तरे लीना प्रविष्टा चन्द्रलेखा यथा चन्द्रकला इव न भ्राजते। किञ्च परन्तु आर्त्ता मदनेन पीड़िता सती त्वां स्मरन्ती चिन्तयन्ती, ध्रुवं जीवयोगं प्राणसम्बन्धं धत्ते धारयतीत्यर्थः।

---

১৩৭। সমানিকা ছন্দের পাদদ্বয় অন্ত্যাক্ষরশূন্য হইলে যেরূপ হয়, সেইরূপ একপাদ হইলে তাহাকে "তূণক" ছন্দ কহে। (অর্থাৎ প্রতিপাদে যথাক্রমে 'র' 'জ' 'র' 'জ' 'র' এই গণ গুলি সন্নিবিষ্ট হইলে তাহাকে 'তূণক' ছন্দঃ কহে)।

म म म य य

१३९। "चित्रा" नामच्छन्दश्चित्रञ्चेत् त्रयो मा यकारौ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ। ऽ ऽ । ऽ ऽ

गोपालीलीलालोला यद्वत् कलिन्दात्मजान्ते
खेलन्मुक्ताहारारण्यस्रग्लसन्मूर्द्धचित्रा।
कंसारातेर्मूर्त्तिस्तद्वन्मे हृदि क्रीड़तीयं
कोऽन्यः स्वर्गो मोक्षो वास्माद्विद्यते तन्न जाने॥

१४०। भवति नजौ भजौ रसहितौ "प्रभद्रकम्।"

---

१३९। चित्रेति।—चेत् यदि त्रयो मा मगणास्तदनु यकारौ यगणौ, तदा चित्रा नाम चित्रं विचित्रं छन्दः स्यात्।

उदाहरति—गोपालीति।—गाः पालयन्तीति गोपालाः आभीराः तेषां स्त्रियः गोपाल्यः तासु या लीला क्रीड़ा तत्र लोला लुब्धा, खेलन् चञ्चलः मुक्ताहारो यस्यां तथाभूता, आरण्यस्रजा वनमालया लसन् विराजमानो यः मूर्द्धा मस्तकः तेन चित्रा समुज्ज्वला, कंसारातेः कंसस्य अरातिः शत्रुः तस्य श्रीकृष्णस्य इयं मूर्त्तिः प्रतिकृतिः, कलिन्दात्मजान्ते यमुनातटे यद्वत् यथा क्रीड़ति विलसति, तद्वत् तथा मे मम हृदि यदि क्रीड़ति ; तदा अस्मात् मनसि श्रीकृष्णलीलास्मरणसम्भूतसुखात् अन्यः कः स्वर्गः मोक्षो वा विद्यते तत् न जाने परमात्मसाक्षात्कार एव स्वर्गः किंवा मोक्षः एतदन्यः स्वर्गो मोक्षो न विद्यते इत्यर्थः।

१४०। क्रमेण न-ज भ-ज-र-गणैर्निबद्धं प्रभद्रकं वृत्तं भवति।

---

১৩৮। যাহার প্রতিপাদে যথাক্রমে 'ম' 'র' 'ম' ও দুইটী 'য' গণ থাকে, এবং প্রথমতঃ সপ্তমাক্ষরে ও পরে অষ্টমাক্ষরে যতি থাকে, তবে তাহাকে 'চন্দ্রলেখা' কহে।

১৩৯। যাহার প্রতিপাদে যথাক্রমে তিনটী 'ম' ও দুইটী 'য' গণ থাকে, উক্ত বিচিত্র ছন্দটী "চিত্রা" নামে অভিহিত হয়।

১৪১। সজনা নযৌ শরদশযতিরিয়-"মেলা।"

১৪২। "চন্দ্রকান্তা' ভিধা রৌ মসৌ যো বিরমঃ স্বরাষ্টৌ।

১৪৩। ননতভরকৃতাষ্টস্বরৈঃ "উপমালিনী"।

১৪৪। "ঋষভা"খ্য মেতদুদিরিতং সজসা সযৌ চেৎ।

---

১৪১। ক্রমেণ সজনয-গণৈর্নিবদ্ধং আদৌ পঞ্চাক্ষরৈঃ ততো দশাক্ষরৈশ্চ কৃতযতি এলা নাম বৃত্তং ভবতি।

১৪২। ক্রমেণ রযুগল-ম-স-য গণৈর্নিবদ্ধং সপ্তাক্ষরৈরষ্টাক্ষরৈশ্চ কৃতযতি চন্দ্রকান্তা নাম বৃত্তং ভবতি।

১৪৩। ক্রমেণ ন-ন-ত-ভ র-গণৈর্নিবদ্ধং অষ্টভিঃ সপ্তভিশ্চ কৃতযতি উপমালিনী নাম বৃত্তং ভবতি।

১৪৪। ক্রমেণ স য স স য গণৈর্নিবদ্ধং ঋষভং নাম বৃত্তং উদিরিতম্।

---

১৪০। প্রতিপাদ যথাক্রমে 'ন' 'জ' 'ভ' 'জ' ও 'র' গণ দ্বারা গঠিত হইলে "প্রভদ্রক" ছন্দ হয়।

১৪১। প্রতিপাদে যথাক্রমে 'স' 'জ' দুইটি 'ন' একটি 'য' গণ থাকিলে, এবং প্রথমতঃ পঞ্চমাক্ষরে পরে দশমাক্ষরে যতি থাকিলে তাহাকে "এলা" ছন্দ কহে।

১৪২। যাহার প্রতিপাদে যথাক্রমে দুইটী 'র' একটী "ম" "স" ও "য" গণ থাকে এবং প্রতি সপ্তাক্ষরে ও অষ্টাক্ষরে যতি থাকে, তাহাকে 'চন্দ্রকান্তা' ছন্দ কহে।

১৪৩। প্রতিপাদে যথাক্রমে দুইটি "ন" একটী "ত" "ভ" ও "র" গণ থাকিলে 'উপমালিনী' ছন্দ কহে। প্রতি অষ্টাক্ষরে ও সপ্তাক্ষরে যতি।

১৪৪। যাহার প্রতিপাদে যথাক্রমে "স" "জ" "স" "স" "য" এই গণগুলি থাকে তাহা "ঋষভ' নামে কথিত হয়।

१४५। कथयन्ति "मानसहंस" नाम सजौ ज्भराः।

१४६। सगणैः शिववक्त्रमितैर्गदिता "नलिनी"।

१४७। शंस "निशिपालक"मिदं भजसनाश्च रः।

इति वृत्तरत्नाकरतत्परिशिष्टयोः।

---

अष्टिः। ( षोडशाक्षरा वृत्तिः )

ग ल र ज ग ल र ज

१४८। "चित्र"संज्ञ-मीरितं समानिकापदद्वयन्तु।

S। S। S। S। S। S। S। S।

विद्रुमारुणाधरौष्ठशोभिवेणुवाद्यहृष्ट-

बल्लवीजनाङ्गसङ्गजातमुग्धकण्टकाङ्ग।

त्वां सदैव वासुदेव पुण्यलभ्यपादसेव

वन्यपुष्पचित्रकेश संस्मरामि गोपवेश॥

---

१४५। क्रमेण स-ज-ज भ-र-गणैर्निबद्धं वृत्तं मानसहंसं नाम कथयन्ति बुधा इति शेषः।

१४६। क्रमेण पञ्चभिः सगणैर्निबद्धा नलिनीनाम वृत्तिः गदिता बुधैरिति शेषः।

१४७। क्रमेण भ-ज-स-न-र-गणैर्निबद्धं वृत्तं निशिपालकं नाम शंस त्वमिति शेषः।

---

১৪৫। প্রতিপাদে যথাক্রমে একটী "স" দুইটী "জ" একটী "ভ" ও একটী "র" এই গণ থাকিলে 'মানসহংস' ছন্দ কহে।

১৪৬। কেবল "স" গণে যাহার প্রতিপাদ গঠিত হয় এবং প্রথমতঃ পঞ্চমাক্ষরে যতি থাকে, তাহাকে 'নলিনী' ছন্দ কহে।

১৪৭। যে ছন্দে প্রতিপাদে যথাক্রমে "ভ" "জ" "স" "ন" ও "র" গণ থাকে, তাহাকে 'নিশিপালক' ছন্দ জানিবে।

भ　र　न　न　न　ग

१४९ । भ्रन्निनगैः स्वरात् ख·"ऋषभगजविलसितम् ।"

यो हरिरुच्चखान खरतरनखशिखरै-
र्दुर्ज्जयदैत्यसिंहसुविकटहृदयतटम् ।
किं न्विह चित्रमेषयदखिलमपहृतवान्
कंसनिदेशवृत्त्यृषभगजविलसितम् ॥

गजतुरगविलसित'मिति शम्भौ

---

१४८ । चित्रेति ।—"र्ग्लौ रजौ समानिका तु" इति पूर्व्वं समानिकालक्षणमभि-हितं, तस्य पादद्वयेन यस्य एकः पादो भवेत्, तत् चित्रसंज्ञकं चित्रं नाम वृत्तं भवेत् ।
उदाहरति—विद्रुमेति ।—विद्रुमारुणे प्रवालवत् लोहिते अधरोष्ठे शोभत इति विद्रुमारुणाधरोष्ठशोभो, तथाभूतः यो वेणुः वंशो तस्य वाद्येन हृष्टानामानन्दितानां वल्लवीजनानां गोपाङ्गनाजनानां अङ्गसङ्गेन शरीरस्पर्शेन जातो मुग्धो मनोरमः कण्टको रोमाञ्चो यस्मिन् तथाभूतं अङ्गं शरीरं यस्य तत्सम्बोधने, हे विद्रुमाधरोष्ठशोभि-वेणुवाद्यहृष्टवल्लवीजनाङ्गसङ्गजातमुग्धकण्टकाङ्ग ! "सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टक" इत्यमरः । पुण्येन लभ्या पादसेवा यस्य तत्सम्बोधने, हे पुण्यलभ्यपादसेव ! वन्यपुष्पैश्चित्राः केशाः यस्य तत्सम्बोधने हे वन्यपुष्पचित्रकेश ! गोपानां वेशो नेपथ्यमिव वेशो यस्य तत्सम्बोधने हे गोपवेश ! हे वासुदेव ! त्वामहं सदैव संस्मरामि सञ्चिन्तयामि ।

१४९ । भ्रन्नीति ।—भस्य रस्य त्रयाणां नानां समाहारः त्रिनं तच्च गस्य भन्निनगैः निबद्धं ऋषभगजविलसितं नाम वृत्तं स्यात्, अत्र स्वरात् सप्तमाक्षरात् खं यतिः कर्त्तव्या ।

---

অষ্টি ( ষোড়শাক্ষরা বৃত্তি ) ।

১৪৮ । সমানিকা ছন্দের দুই পাদে যাহার একপাদ গঠিত হয়, তাহা 'চিত্র' নামে কথিত হয় ।

भ स म त न ग

१५० । भात् समतनगैरष्टच्छेदे स्यादिह "चकिता" ।

ऽ । ।।।ऽ ऽऽऽऽऽ ।।।।। ऽ

दुर्ज्जयदनुजश्रेणी दुश्चेष्टाशतचलिता
यद्भुजपरिघत्राता याता साध्वसविगमम् ।
दीव्यति दिविषन्माला शश्वन्नन्दनविपिने
गच्छत शरणं कृष्णं तं भीता भवरिपुतः ॥

---

उदाहरति—यो हरिरिति ।—धृतनरसिंहरूप इत्यर्थः । खरतरनखशिखरैः तीक्ष्णतरनखराग्रभागैः दुर्ज्जयदैत्यसिंहस्य हिरण्यकशिपोरित्यर्थः, सुविकटं अतिकठिनं हृदयतटं वक्षःस्थलं उत्खाय विदारयामास, एषः श्रीकृष्णः अखिलं समस्तं कंसनृपतेः कंसराजस्य निदेशेन आज्ञया दृप्यतोः गर्व्वितयोः ऋषभगजयोः ऋषभरूपारिष्टनामदानव-गजरूपकुवलयदानवयोः विलसितं चेष्टितं यत् अपहृतवान् व्यर्थीकृतवान् इह विषये किं चित्रं आश्चर्य्यं नु । यः हिरण्यकशिपुरूपं दानवसिंहमेव नखाग्रेण जघान तस्य गोहस्तिरूपदानववधे किमाश्चर्य्यमिति ।

१५० । भादिति ।—भ-स-म-त-न-न-ग-गणैर्निबद्धे पादे अष्टच्छेदे अष्टमाक्षरेण विरामे च चकिता नाम वृत्तं स्यात् ।

दुर्ज्जयेति ।—दुर्ज्जयाः जेतुमशक्या याः दनुजश्रेणयः दानवसमूहाः तासां दुश्चेष्टाशतैः शतशतदुष्कर्म्मभिः चलिता त्रस्ता दिविषन्माला देवानां समूहः यद्भुज-परिघत्राता परिहन्यतेऽनेनेति परिघः लगुडविशेषः । भुज एव परिघः यस्य श्रीकृष्णस्य भुजपरिघेण त्राता रक्षिता सती साध्वसविगमं निर्भयं याता प्राप्ता नन्दनविपिने इन्द्रस्य नन्दनाख्यावने दीव्यति विहरति । भवरिपुतः भीता यूयं तं कृष्णं शरणं रक्षितारं गच्छत लभध्वम् । श्रीकृष्णचरणाश्रये कृते सर्व्वेषामेव शत्रुतः अभयं सुखेन सम्पद्यते इति भावः ।

---

১৪৯ । যাহার প্রতিপাদ ক্রমশঃ একটী "ভ" এবং "র" ও তিনটী "ন" এবং একটী "গ" গণে গঠিত হয় এবং সপ্তাক্ষরে যতি থাকে, তাঁহাকে 'ঋষভগজবিলসিত' ছন্দ কহে ।

न र ल ग ज र ल ग

१५१। प्रमाणिका पदद्वयं वदन्ति "पञ्चचामरम् ।"

। ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ

सुरद्रुमूलमण्डपे विचित्ररत्ननिर्म्मिते
लसद्वितानभूषिते सलीलविभ्रमालसम् ।
सुराङ्गनाभवल्लवीकरप्रपंञ्चचामर-
स्फुरत्समीरवीजितं सदाच्युतं भजामि तम् ॥

म भ न म न ग

१५२। म्भौ नो म्नौ गो "मदनललिता" वेदैः षड़्तुभिः ।

---

१५१। प्रमाणिकेति ! पूर्वं "प्रमाणिका जरौ लगौ" इति प्रमाणिका-लक्षण-सुक्तम् । प्रमाणिकापदद्वयेन यस्य एकः पादो ग्रथ्यते, तत् पञ्चचामरं नाम वृत्तं वदन्ति कथयन्ति पण्डिता इति शेषः ।

सुरेति ।—विचित्ररत्ननिर्म्मिते नानाविधमणिसमलङ्कृते, लसता उल्लसता वितानेन चन्द्रातपेन भूषिते अलङ्कृते सुरद्रुः कल्पवृक्षः तस्य मूले यो मण्डपः तस्मिन् । "उल्लोचः स्यात् वितानोऽस्त्री चन्द्रा चन्द्रातपः पुमान् ।" इति शब्दरत्नावली । सलीलविभ्रमालसं लीलया सह सलीलः तादृशो यो विभ्रमः तेन अलसं मन्थरं सुराङ्गनाभानां सुरसुन्दरी-सदृशीनां वल्लवीनां गोपीनां करेषु प्रपञ्चा विस्तृता ये चामराः तेभ्यः स्फुरता सञ्चलता समीरणेन पवनेन वीजितं सेवितं तं प्रसिद्धं श्रीकृष्णं सदा भजामि ।

१५२। म्भाविति ।—वेदैः चतुर्थैः षड़्तुभिः षष्ठैः षष्ठैरक्षरैर्विच्छिन्ना मदनललितां नाम वृत्तम्भवेत् ।

---

১৫০। যাহার প্রতিপাদ ক্রমশঃ "ভ" "স" "য" "ত" "ন" ও "গ" গণে গঠিত হয় এবং অষ্টাক্ষরে যতি থাকে, তাহা 'চকিতা' ছন্দ হইবে।

১৫১। যাহার প্রতিপাদ 'প্রমাণিকা' ছন্দের দুই পাদে গঠিত হয়, তাহাকে 'পঞ্চচামর' কহে।

S S S S । । । । । । S S S । । S
विभ्रष्टस्रग् गलितचिकुरा धौताधरपुटा
ग्लायत्पत्रावलिकुचतटोच्छ्वासोर्म्मितरला ।
राधात्यर्थं मदनललितान्दोलाऽलसवपुः
कंसाराते रतिरसमहो चक्रेऽतिचटुलम् ॥

न ज भ ज र ग
१५२ । नजभजरैः सदा भवति "वाणिनी" गयुक्तैः ।

। । । । S । S । । । S । S । S S
स्फुरतु ममाननेऽद्य ननु वाणि नीतिरम्यं
तव चरणप्रमादपरिपाकतः कवित्वम् ।
भवजलराशिपारकरणक्षमं मुकुन्दं
सततमहं स्तवैः स्वरचितैः स्तवानि नित्यम् ॥

---

उदाहरति—विभ्रष्टेति ।—विभ्रष्टा च्युता स्रक् माला यस्याः सा, गलितचिकुरा विच्छिन्नकेशा धौताधरपुटा पाटलीभूताधरस्थला ग्लायन्ती मलिना पत्रावली पत्ररचना यत्र तादृशं कुचतटं यस्याः तथाभूता उच्छ्वासाः दीर्घश्वासाः ऊर्म्मय इव तैस्तरला निःश्वासातिशय्येन दुर्बला, मदनललितेन कामविलासेन य आन्दोलः चाञ्चल्यं तेन अलसं मन्थरं वपुर्यस्याः सा राधा, कंसारातेः श्रीकृष्णस्य अतिचटुलं प्रियतमं रतिरसं रत्यनुरागं चक्रे । अहो इत्यद्भुते । सुरतव्यदितायामपि राधायां पुनश्च रिरंसुरासीत् गोविन्द इति भावः ।

१५२ । नजेति ।—गयुक्तैर्नजभजरैर्गणैर्वाणिनी नाम वृत्तं भवतीत्यर्थः ।

---

১৫২। যাহার প্রতিপাদ যথাক্রমে "ম" "ভ" "ন" "ম" "ন" ও একটা "গ" গণে গঠিত হয় এবং প্রথমতঃ চতুর্থাক্ষরে পরে ষষ্ঠাক্ষরে যতি থাকে, তাহা 'মদনললিতা' ছন্দ নামে কথিত হয়।

य म न स र ग

१५४। यमौ न स्रौ गश्च "प्रवरललितं" नाम वृत्तम् ।

। ऽ ऽ ऽ ऽ ऽ । ।।।।ऽऽ।ऽऽ

भुजोत्क्षेपः शून्ये चलवलयझङ्कारयुक्तो
मुधा पादन्यासः प्रकटिततुलाकोटिनादः ।
स्मितं वक्त्रेऽकस्माद् दृशि पटुकटाक्षोर्म्मिलीला
हरौ जीयादीदृक् प्रवरललितं वल्लवीनाम् ॥

---

स्फुरत्विति ।—हे वाणि ! अद्य तव चरणस्य पादसेवायाः परिपाकतः परिणामात् नीतिरम्यं नीत्यर्थसम्बद्धतया मनोहरं कवित्वं मम आनने स्फुरतु आविर्भवतु । अहं सततं स्वरचितैः स्तवैः भवजलराशिपारकरणक्षमं नित्यं सनातनं मुकुन्दं श्रीकृष्णं स्तवानि प्रसादयानि । स्तुधातोर्लोटि उत्तमपुरुषे रूपम् ।

१५४ ।—यमनसरगणैरेकेन गुरुणा च निबद्धं प्रवरललितं नाम वृत्तं भवति ।

उदाहरति—भुजोत्क्षेप इति ।—शून्ये आकाशमार्गे चलानां चञ्चलानां वलयानां हस्ताभरणानां झङ्कारेण ध्वनिना युक्तः भुजोत्क्षेपः बाहुप्रसारणं श्रीकृष्णस्य कण्ठाश्लेषार्थमित्यर्थः, प्रकटितः प्रव्यक्तः तुलाकोटीनां नूपुराणां नादः ध्वनिः पादन्यासः पादक्षेपः मुधा वृथा अकस्मात् हेतुमन्तरेण वक्त्रे आनने स्मितं ईषद्धासः दृशि नयने पटुकटाक्षोर्म्मिलीला पटुश्चतुरतापूर्णः यः कटाक्षः तस्य ऊर्म्मिः परम्परा सैव लीला विलासः । हरौ श्रीकृष्णविषये वल्लवीनां गोपाङ्गनानां ईदृक् एवम्प्रकारं प्रवरललितं प्रकृष्टहावः जीयात् उत्कर्षेण वर्त्तताम् ।

---

১৫৩। যাহার প্রতিপাদ যথাক্রমে "ন" "জ" "ভ" "জ" "র" ও "গ" গণে গঠিত হয়, তাহা 'বাণিনী' ছন্দঃ হয়।

১৫৪। যাহার প্রতিপাদ যথাক্রমে "য" "ম" "ন" "স" "র" ও "গ" গণে গঠিত হয়, তাহা 'প্রবরললিত' নামক বৃত্ত।

१५५। द्विगुणितवसुलघुभि"रचलधृति"रिह।

। । । । । । । । । । । । । । । ।

तरणिदुहितृतटरुचिरतरवसतिरमरमुनिमुखजनविहितनुतिरिह।
मुररिपुरभिनवजलधररुचितनुरचलधृतिरुदयति सुकृतिहृदि खलु॥

न ज भ ज त ग

१५६। "गरुड़रुतं" नजौ भजतगा यदा स्युस्तदा।

। । । । ऽ । ऽ । । । ऽ । ऽ ऽ । ऽ

अमरमयूरमानसमुदे पयोदध्वनिर्गरुड़रुतं सुरारिभुजगेन्द्रसन्त्रासने।
धरणिभरावतारविधिडिण्डिमाड़म्बरः स जयति कंसरङ्गभुवि
सिंहनादो हरिः॥

---

१५५। द्विगुणितेति।—इह छन्दोग्रन्थे द्विगुणितवसुलघुभिः षोड़शभिर्लघुभिरक्षरैः अचलधृतिर्नाम वृत्तं स्यात् इत्यर्थः।

तरणीत्यादि।—तरणिः सूर्य्यः तस्य दुहिता यमुना, "कालिन्दी सूर्य्यतनया यमुना शमनस्वसा" इत्यमरोक्तिः। तस्यास्तटे रुचिरतरा अतिमनोज्ञा वसतिर्भवनं यस्य। "वसती रात्रिवेश्मनोः" इत्यमरः। अमरमुनिमुखैः नारदादिदेवर्षिप्रभृतिभिः जनैः विहिता कृता नुतिः स्तवो यस्य सः अभिनवो यो जलधरो मेघस्तस्य रुचिः कान्तिरिव रुचिः कान्तिर्यस्याः तादृशी तनुः शरीरं यस्य सः। अचलधृतिः स्थिरसन्तोषः अथवा धृतगोवर्द्धनगिरिः मुररिपुः श्रीकृष्णः सुकृतिहृदि पुण्यवतां हृदये उदयति उल्लसति खलु।

१५६। गरुड़ेति।—नजभजतगणानन्तरमेको गुरुश्चेत् गरुड़रुतं नाम वृत्तं भवेत्।

---

১৫৫। ষোড়শটী লঘু অক্ষরে রচিত বৃত্ত 'অচলধৃতি' নামে কথিত হয়।

১৫৬। যখন কোনও ছন্দের প্রতিপাদে যথাক্রমে "ন" "জ" "ভ" "জ" "ত" "গ" এই গণের সন্নিবেশ থাকিবে, তখন উহাকে 'গরুড়রুত' ছন্দ বলিয়া জানিবে।

१५७ । संकथिता भरौ नरनगाश्च "धीरललिता" ।
१५८ । पञ्चभकारयुता"ऽश्वगति"र्यदि चान्त्यगुरुः ।
१५९ । नजरभभेन गेन च स्यान्-"मणिकल्पलता" ।
१६० । यस्मिन् सर्वे गा राजन्ते "ब्रह्माद्यं" तद्रूपं नाम ।

---

अमरेति ।—अमरा देवा एव मयूरास्तेषां मानसं चित्तं तस्य मुदे आनन्दाय पयोदध्वनिः मेघगर्ज्जितं, सुराणां अरयो दानवाः त एव भुजगेन्द्राः सर्पश्रेष्ठाः तेषां सन्त्रासने भयोत्पादने गरुड़स्य खगपतेः रुतं ध्वनिः धरणेः पृथिव्याः भारावतारे विधौ भारमोचनकर्म्मणि डिण्डिमाड़म्बरः, वाद्यविशेषध्वनिः । "डिण्डिमः स्यादेकवादी गुरुमर्द्दल इत्यपी"ति शब्दरत्नावली । ढेंड़ा इति यस्य प्रसिद्धिः । "आड़म्बरस्तूर्य्यरवे" इत्यमरः । श्रीकृष्णस्य कंसरङ्गभुवि कंसरणचत्वरे सः सिंहनादः जयति सर्वोत्कर्षेण वर्त्तताम् । अत्र रूपकसङ्कीर्ण उल्लेखनामालङ्कारः ।

१५७ । क्रमेण भ र न र न ग-गणैर्घटिता धीरललिता नाम वृत्तिः कथिता उक्ता पण्डितैरिति शेषः ।

१५८ । क्रमेण पञ्चभिर्भगणैर्युक्ता अन्ते च गुरुवर्णघटिता अश्वगतिर्नाम वृत्तिः स्यात् ।

१५९ । क्रमेण न ज र भ भ ग-गणैर्घटिता मणिकल्पलता नाम वृत्तिः स्यात् ।

१६० । यस्मिन् वृत्ते प्रतिपादं सर्व्वे गा राजन्ते सर्वे एव वर्णा दीर्घा इत्यर्थः, तत् वृत्तं ब्रह्माद्यं रूपं नाम ब्रह्मरूपं नाम इत्यर्थः ।

---

১৫৭ । যাহার প্রতিপাদে যথাক্রমে "ভ" "র" "ন" "র" "ন" ও 'গ' গণ থাকে, তাহাকে 'ধীরললিতা' বৃত্ত কহে ।

১৫৮ । প্রতিপাদে যথাক্রমে পাঁচটী "ভ" গণ ও পরে একটী গুরু থাকিলে, 'অশ্বগতি' বৃত্তি হয় ।

১৫৯ । প্রতিপাদে যথাক্রমে "ন" 'জ' 'র' দুইটী 'ভ' ও একটি "গ" গণ সন্নিবিষ্ট হইলে 'মণিকল্পলতা' বৃত্তি হয় ।

(क) भो रयना नगौ च यस्यां "वरयुवति"रियम्।

इति वृत्तरत्नाकरपरिशिष्टे।

(ख) तो नो भतयगकारयुतश्चेदिह "बालाख्या"।

इति क्वचित्।

---

अत्यष्टिः। ( सप्तदशाक्षरा वृत्तिः )।

य म न स भ ल ग

१६१। रसै रुद्रैश्छिन्ना यमनसभला गः "शिखरिणी"।

। ऽ ऽ ऽ ऽ ऽ । । । । । ऽ ऽ । । । ऽ

करादस्य भ्रष्टे ननु शिखरिणीदृश्यतिशिशौ-
विलीनाः स्मः सत्यं नियतमवधेयं तदखिलैः।
इति त्रस्यद्गोपानुचितनिभृतालापजनितं
स्मितं बिभ्रद्देवो जगदवतु गोवर्द्धनधरः॥

---

१६०। (क) क्रमेण भ र य न न ग-गणैरचिता वरयुवतिर्नाम वृत्तिः स्यात्।

१६०। (ख) क्रमेण त न भ त य ग्-गणैरचितं वालानाम वृत्तं भवति।

१६१। रसैरिति। क्रमेण य म न स भ ल-गणैः एकेन गुरुणा च घटिता, रसैः षड्भिः रुद्रैः एकादशभिश्च अक्षरैः छिन्ना कृतयतिः शिखरिणी नाम वृत्तं भवेत्।

उदाहरणं—करादिति।—ननु भोः 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे' ननु इति

---

১৬০। যে ছন্দের প্রতিপাদে সকল অক্ষরই গুরু থাকে, তাহ 'ব্রহ্মরূপ' নামে কথিত হয়।

১৬০-ক। প্রতিপাদে যথাক্রমে 'ভ' 'র' "য" এবং দুইটী "ন" ও একটী 'গ' গণ থাকিলে তাহা 'বরযুবতি' ছন্দঃ হয়।

১৬০-খ। যদি প্রতিপাদ যথাক্রমে 'ত" "ন" "ভ" "ত" "য" 'গ' —এই সকল গণে গঠিত হয়, তবে তাহা 'বালা' ছন্দ নামে কথিত হয়।

ज स ज स य ल ग

१६२। जसौ जसयला वसुग्रहयतिश्च "पृथ्वी" गुरुः ।

। S । । । S । S । । । S । S S । S

दुरन्तदनुजेश्वरप्रकरदुःस्थपृथ्वीभरं
जहार निजलीलया यदुकुलेऽवतीर्य्याशु यः ।
स एष जगतां गतिर्दुरितभारमस्मादृशां
हरिष्यति हरिः स्तुतिस्मरणचाटुभिस्तोषितः ॥

कोपः । ईदृशि एवम्प्रकारे शिखरिणि गोवर्द्धनाख्यपर्वते । अस्य अतिशिशोः श्रीकृष्णस्य करात् भ्रष्टे अधःपतिते सति वयं पर्वतस्याः सर्व्वे सत्यं भ्रु वनेव विलीनाः लयं प्राप्ताः स्थः भवामः । तत् तस्मात् अखिलैः सकलैरस्माभिः नियतं अवश्यं अवधेयं सावधानैः भवितव्यं इति एवम्प्रकारेण वसन्तः उद्वेगमापन्नाः ये गोपाः तेषां अनुचितः बालक-स्यापि विश्वम्भरस्य तद्वहने सामर्थ्यात् अयुक्तः निभृतः गूढ़ः य आलापः परस्परकथनं तेन जनितं स्मितं मृदुहासं विभ्रत् दधत् गोवर्द्धनधरो देवः श्रीकृष्णः जगत् ब्रह्माण्डं अवतु रक्षतु ।

१६२। जसाविति ।—यस्याः पादे आदौ जसौ गणौ तदनु जसया गणास्तदनु एको लघुः एकश्च गुरुः स्यात् अष्टमैर्नवमैश्च अक्षरैः कृतयतिः सा पृथ्वी नाम छन्दं भवेत् ।

उदाहरणं—दुरन्तेति ।—यः हरिः यदुकुले अवतीर्य्य जन्म परिग्रह्य निजलीलया दुरन्तानां दुर्ज्जयानां दनुजेश्वराणां प्रकरेण समूहेन दुःस्था कातरा या पृथ्वी पृथिवी तस्या भरं भारं आशु झटिति जहार विनाशयामास, स एष जगतां गतिः आश्रयः हरिः स्तुतिस्मरणचाटुभिः गुणकीर्त्तनचिन्तनप्रियवचनैः तोषितः तर्पितः सन् अस्मादृशां वयमिव दृश्यन्ते ये ते अस्मादृशः तेषां दुरितभारं पापसमूहं हरिष्यति विनाशयिष्यति ।

অত্যষ্টি ( সপ্তদশাক্ষরা বৃত্তি )।

১৬১। যাহার পাদগুলি ক্রমশঃ "য" "ম" "ন" "স" "ভ" "ল" ও "গ" গণে গঠিত হয় এবং প্রথমতঃ ছয় অক্ষরে পরে একাদশ অক্ষরে যতি থাকে, তাহাকে 'শিখরিণী' ছন্দ কহে।

भ र न भ न ल ग

१६३। दिङ्मुनि "वंशपत्रपतितं" भरनभनलगै:।

S I I S I S I I I S I I I I I I S

नूतनवंशपत्रपतितं रजनिजलवं
पश्य मुकुन्द मौक्तिकमिवोत्तममरकतगम्।
एष च तं चकोरनिकरः प्रपिबति मुदितो
वान्तमवेत्य चन्द्रकिरणैरमृतकणमिव॥
सम्प्रति लब्धजन्म शनकैः कथमपि लघुनि
क्षीणपयस्युपेयुषि भिदां जलधरपटले।
खण्डितविग्रहं बलभिदो धनुरिह विविधाः
पूरयितुं भवन्ति विभवः शिखरमणिरुचः॥

वंशपत्रपतितेति क्वचित्। वंशदलमिति शम्भौ। [ इति भारवौ।५।४३ ]

---

१६३। दिङ्मुनीति।—भरनभनलगैर्घटितपादं वृत्तं वंशपत्रपतितं नाम भवेत्। अत्र दशमैः सप्तमैश्च अक्षरैर्यतिः कार्य्या।

उदाहरति—नूतनेति।—हे मुकुन्द! श्रीकृष्ण! नूतनवंशपत्रपतितं उत्तममरकतगं उत्कृष्टमरकताख्यरत्नमयपात्रगतं रजनिजलवं रजनीहिमकणं मौक्तिकं मुक्ताफलमिव पश्य। एषः चकोरनिकरोऽपि तं रजनिजलवं चन्द्रकिरणैर्वान्तं त्यक्तं अमृतकणं सुधाबिन्दुं अवेत्य ज्ञात्वा इव मुदितः आनन्दितः सन् प्रपिबति।

---

১৬২। যাহার পাদগুলি যথাক্রমে "জ" "স" "জ" "স" "য" ও "ল" গণে এবং পরে একটী গুরুবর্ণে গঠিত এবং প্রথমতঃ অষ্টাক্ষরে পরে "ন" অক্ষরে যতি থাকে, তাহাকে 'পৃথ্বী' ছন্দ কহে।

১৬৩। যাহার পাদগুলি ক্রমশঃ "ভ" "র" "ন" "ভ" "ন" "ল"

म　भ　न　ग　ग　य　य

१६४। "मन्दाक्रान्ता"म्बुधिरसनगैर्मो भनौ गौ ययुग्मम् ।

ऽ ऽ ऽ ऽ । । । । ।ऽ ऽ । ऽ ऽ । ऽ ऽ

प्रेमालापैः प्रियवितरणैः प्रीणिता क्रीड़नाद्यै-
र्मन्दाक्रान्ता तदनु नियतं वश्यतामेति बाला ।
एवं शिक्षावचनसुधया राधिकायाः सखीनां
प्रीतः पायात् स्मितसुवदनो देवकीनन्दनो नः ॥

---

उदाहरणान्तरं किरातार्ज्जुनीयात दर्शयति--सम्प्रतीति।—सम्प्रति शरत्काले इत्यर्थः, इह पर्वते विविधाः नानावर्णाः शिखरमणिरुचः शृङ्गस्थितरत्नकान्तयः क्षीण-पयसि निर्ज्जले अतएव लघुनि अगुरुणि एवं भिदां भेदं उपेयुषि प्राप्तवति जलधर-पटले मेघमण्डले कथमपि शनकैः शनैः लब्धजन्म सञ्जात खण्डितविग्रहं छिन्नस्वरूपं वलभिद इन्द्रस्य धनुः पूरयितु विभवः समर्था भवन्ति ।

१६४। मन्देति।—यस्याः पादे मभना गणास्तदनु गुरुयुगलं यगणद्वयञ्च, अम्बुधिरसनगैः चतुर्थषष्ठसप्तमैर्विच्छिन्ना सा मन्दाक्रान्ता नाम वृत्तमवेत् ।

उदाहरति—प्रेमेति। प्रेमयुक्ताः सस्नेहा आलापाः तैः प्रियवितरणैः अभीष्ट-वस्तुदानैः क्रीड़नाद्यैः कन्दुकप्रभृतिक्रीड़नकद्रव्यैश्च प्रीणिता सन्तोषिता तदनु ततःपरं मन्दाक्रान्ता अल्पासक्तिं गमिता सती वाला नियतं ध्रुवं वश्यतां अधीनतां एति लभते । एवं एवम्प्रकारकं राधिकायाः सखीनां शिक्षावचनसुधया उपदेशवचनामृतेन प्रीतः सन्तुष्टः स्मितसुवदनः ईषद्धास्यशोभितमुखः देवकीनन्दनः श्रीकृष्णः नः अस्मान् पायात् रक्षतु ।

---

ও "গ" গণে গঠিত হয় এবং প্রথমতঃ দশমাক্ষরে পরে সপ্তমাক্ষরে যতি হয়, তাহা 'বংশপত্রপতিত' ছন্দঃ।

১৬৪। যাহার পাদগুলি ক্রমশঃ "ম" "ভ" "ন" এবং দুইটী "গ" ও দুইটী

न स म र स ल ग

१६५। नसमरसला गः षड्वेदैर्हयै"र्हरिणी" मता।

। । । । । । ऽ ऽ ऽ ऽ ऽ । ऽ । । ऽ । ऽ

व्यधित स विधिर्नेत्रं नीत्वा ध्रुवं हरिणीगणाद्-

व्रजमृगदृशां सन्दोहस्योल्लसन्नयनश्रियम्।

यदयमनिशं दूर्वाश्यामे मुरारिकलेवरे

व्यकिरदधिकं वन्नाकाङ्क्षे विलोलविलोचनम्॥

न ज भ ज ज ल ग

१६६। यदि भवतो नजौ भजजला गुरु"नर्कुटकम्"॥

---

१६५। नसमेति —यस्याः पादे आदौ नसमरसा गणास्तदनु एको लघुः एकश्च गुरुः षड्भिश्चतुर्भिः सप्तभिश्च कृतयतिः सा हरिणी नाम वृत्तं मता दृष्टा।

उदाहरणं—व्यधितेति। स निर्माणदक्षतया प्रसिद्धो विधिः सृष्टिकर्त्ता ध्रुवं निश्चितं हरिणीगणात् मृगीसमूहात् नयनश्रियं नेत्रशोभां संगृह्य व्रजमृगदृशां व्रजयुवतीनां सन्दोहस्य समूहस्य उल्लसन्नयनश्रियम् रमणीयनेत्रशोभां व्यधित निर्म्मितवान्। यत् यस्मात् हेतोः अयं व्रजमृगदृशां सन्दोहः निचयः दूर्वाश्यामे दूर्वापत्रनिभश्यामलवर्णे वन्ना आकाङ्क्षा यस्मिन् तस्मिन् जातस्पृहे इत्यर्थः, मुरारिकलेवरे श्रीकृष्णशरीरे विलोलं सतृष्णं यत् विलोचनं नेत्रं तत् अनिशं सर्व्वदा अधिकं सातिशयं व्यकिरत् अपातयत्। दूर्वादले हरिणीनां दृष्टिः सततमेव सस्पृहं पततीति भावः। "लोलश्चलसतृष्णयो"रित्यमरः।

१६६। यदीति।—यदि आदौ नजौ गणौ भवतः, तदनु भजजा गणा भवन्ति,

---

"स" গণে গঠিত হয় এবং প্রথমতঃ চতুর্থাক্ষরে পরে ষষ্ঠাক্ষরে তদনন্তর সপ্তমাক্ষরে যতি থাকে, তাহাকে 'মন্দাক্রান্তা' ছন্দ কহে।

১৬৫। যাহার পাদগুলি ক্রমশঃ"ন" "স" "ম" "র" "স" "ল" ও "গ" গণে গঠিত হয় এবং প্রথমতঃ ষড়ক্ষরে পরে চতুরক্ষরে তদনন্তর সপ্তাক্ষরে যতি থাকে, তাহা "হরিণী" ছন্দ নামে কথিত হয়।

। । । । S । S । । । S । । S । । S

व्रजवनितावसन्तलतिकाविलसन्मधुपं
मधुमथनं प्रपन्नजनवाञ्छितकल्पतरुम्।
विभुमभिनौति कोऽपि सुकृती मुदितेन हृदा
रुचिरपदावलीघटितनर्द्दटकेन कविः॥

१६७। हयऋतुसागरैर्यतियुतं यदि "कोकिलकम्"।

। । । । S । S । । । S । । S । । S

लसदरुणोच्चयं मधुरभाषणमोदकरं
मधुसमयागमे सरसकेलिभिरुल्लसितम्।

---

तदनु च एको लघुः एकश्च गुरुः स्यात्, तदा नर्दटकं नाम वृत्तं स्यात्। गुर्विति नपुंसकनिर्द्देशोऽक्षरमित्यस्योष्यस्य विशेषणतया निर्द्देशात्, सूत्रे लिङ्गं संख्या कालञ्चातन्त्राणीति न्यायाद्वा। प्रक्रमभङ्गस्तु सहनीय एव।

व्रजेति।—व्रजवनिता गोप्य एव वसन्तलतिकाः तासु विलसन्तं क्रीड़न्तं मधुपं भ्रमरस्वरूपं प्रपन्नजनानां वाञ्छितस्य अभीष्टस्य कल्पतरुं कल्पद्रुमस्वरूपं विभुं जगदीशं मधुमथनं मधुनामानं दैत्यं मथितवान् यः स मधुमथनस्तं श्रीकृष्णं कोऽपि सुकृती पुण्यवान् कविः मुदितेन सन्तुष्टेन हृदा मनसा रुचिरपदावलीभिः मनोज्ञपदसमूहैः घटितेन रचितेन नर्द्दटकनामच्छन्दोबद्धपद्येन अभिनौति स्तौति।

१६७। हयेति।—यदि पूर्व्वोक्तं नर्द्दटकं हयऋतुसागरैः सप्तमषष्ठचतुर्थाक्षरैर्यतियुतं भवेत्, तदा कोकिलकं नाम वृत्तं स्यात्।

---

১৬৬। যদি প্রতিপাদ যথাক্রমে "ন" "জ" "ভ" "জ" "জ" "ল" গণ ও একটী গুরুবর্ণ দ্বারা গঠিত হয়, তবে তাহা "নর্দ্দটক" নামে কথিত হয়।

১৬৭। উক্ত নর্দ্দটক লক্ষণের গুরুলঘুনিয়মসত্ত্বে যদি প্রথমতঃ সপ্তাক্ষরে

अलिललितद्युतिं रविसुतावनकोकिलकं
ननु कलयामि तं सखि सदा हृदि नन्दसुतम् ॥

म भ न म य ल ग

१६८। वेदर्त्तुस्वरैर्मभनमयला गश्चेत्तदा "हारिणी"।

ऽ ऽ ऽ ऽ । । । । ।ऽ ऽ ऽ । ऽ ऽ।ऽ

यस्या नित्यं श्रुतिकुवलये श्रीशालिनी लोचने
रागः स्वीयोऽधरकिसलये लाक्षारसाञ्जनम्।
गौरी कान्तिः प्रकृतिरुचिरा रम्याङ्गरागच्छटा
सा कंसारेरजनि न कथं राधा मनोहारिणी ॥

---

लसदिति।—ननु हे सखि! 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इति कोषः। लसन्ती चञ्चले अरुणे ईषद्रक्तवर्णे च ईक्षणे लोचने यस्य तं, मधुरभाषणेन मधुरालापेन मोदकरं प्रीतिकरं मधुसमयागमे वसन्तऋतूदये सरसाः सानुरागाः प्रिया इति यावत् याः केलयः क्रीड़ाः ताभिः उल्लसितं आनन्दितं अलिललितद्युतिं भ्रमरवन्मनोहरकान्तिं रविसुतावने यमुनोपवने कोकिलकं कोकिलस्वरूपं तं नन्दसुतं श्रीकृष्णं सदा हृदि कलयामि चिन्तयामि।

१६८। वेदेति।—चेत् यदि मभनमयगणानन्तरं लगौ स्यातां, तदा हारिणी नाम वृत्तं भवेत्।

यस्या इति।—यस्याः राधायाः श्रिया शोभया शालते इति श्रीशालिनी रमणीये लोचने नयने एव नित्यं श्रुतिकुवलये कर्णोत्पलस्वरूपे अधरकिसलये अधरपल्लवे स्वीयः स्वाभाविकः रागः रक्तिमा एव लाक्षारसाञ्जनं लाक्षाद्रवमयविलेपनद्रव्यम्।

---

পরে ষড়ক্ষরে তৎপর চতুরক্ষরে যতি থাকে, তবে তাহা "কোকিলক" নামে কথিত হয়।

১৬৮। যদি প্রতিপাদ যথাক্রমে "ম" "ভ" "ন" "ম" "য" "ল" ও "গ" গণে গঠিত হয় এবং প্রথমতঃ চারি অক্ষরে, পরে ছয় অক্ষরে ও তদনন্তর সপ্তাক্ষরে যতি থাকে, তবে "হারিণী" ছন্দঃ হইয়া থাকে।

म　भ　न　र　स　ल　ग

१६९। "भाराक्रान्ता"मभनरसला गुरुः श्रुतिषड्ढयैः ।

ऽ ऽ ऽ ऽ । । । । । । ऽ । ऽ । । ऽ । ऽ

भाराक्रान्ता मम तनुरियं गिरीन्द्रविधारणात्
कम्पं धत्ते श्रमजलकणं तथा परिमुञ्चति ।
इत्यावृण्वन् जयति जलदस्वनाकुलवल्लवी-
संश्लेषोत्थं स्मरविलसितं विलोक्य गुरुं हरिः ॥

१७०। रसयुगहययुङ् नौ म्रौ सो लगौ हि यदा "हरिः" ।

---

प्रकृतिरुचिरा स्वभावमनोहरा गौरी गौरवर्णा कान्तिरिव अङ्गरागच्छटा कुङ्कुमादिविले-पनजनिता द्युतिः 'अङ्गरागो विलेपन'मिति शब्दरत्नावली। सा राधा कंसारातेः श्रीकृष्णस्य मनोहारिणी मनोमोहिनी कथं न अजनि अभूत् ।

१६९। भारेति।—मभनरसगणानन्तरं लगौ वर्त्तेते चेत् भाराक्रान्ता नाम वृत्तं स्यात् । अत्र चतुर्थषष्ठसप्तमैरक्षरैर्यतिः कर्त्तव्या ।

उदाहरणं—भाराक्रान्तेति।—हरिः श्रीकृष्णः गुरुं गुरुजनं विलोक्य जलदस्वनेन मेघगर्ज्जनेन आकुलानां व्यस्तानां वल्लवीनां गोपाङ्गनानां संश्लेषोत्थं आलिङ्गनप्रभवं स्मरविलसितं कामविकारं इति एवम्प्रकारेण आवृण्वन् संगोपयन् जयति। आवरण-प्रकारमाह—गिरीन्द्रविधारणात् गोवर्द्धनाख्यपर्व्वतधारणात् भाराक्रान्ता मम इयं तनुः शरीरं कम्पं धत्ते तथा श्रमजलकणं परिश्रमजनितस्वेदविन्दूं परिमुञ्चति ।

१७०। रसेति। यत्र प्रतिपादं क्रमेण नगणद्वयं मगणरगणौ एकः सगणः लगणः गगणश्च भवति, षष्ठाक्षरे चतुर्थाक्षरे सप्तमाक्षरे च यतिः स्यात्, तदा हरिर्नाम वृत्तं भवति ।

---

১৬৯। যদি প্রত্যেক পাদে যথাক্রমে "ম" "ভ" "ন" "র" "স" "ল" ও পরে একটী গুরুবর্ণে পঠিত হয় এবং প্রথমতঃ চারি, পরে ছয়, তদনন্তর সাত অক্ষরে যতি থাকে, তবে "ভারাক্রান্তা" ছন্দ হয়।

१७१। भवेत् "कान्ता" युगरसहयैर्यभौ नरसा लगौ।

१७२। ससजै"रतिशायिनी" मता भजपरैर्गुरुभ्याम्।

१७३। अवेहि "पञ्चचामर" जरौ जरौ जगौ लघुश्च।

इति वृत्तरत्नाकरपरिशिष्टे।

धृतिः। (अष्टादशाक्षरा वृत्तिः)।

म त न य य य

१७४। स्याद्भूतर्त्वश्वैः "कुसुमितलतावेल्लिता" म्तौ नयौ यौ।

---

१७१। भवेदिति। यत्र यभनरसलगा गणाः क्रमेण प्रतिपादं भवन्ति, सा कान्ता नाम वृत्तं भवेत्।

१७२। ससजेति। यत्र आदौ सगणद्वयं एको जगणः भजौ च गणौ ततो द्वौ गुरू सा अतिशायिनी नाम वृत्तं भवति।

१७३। अवेहीति। यत्र क्रमेण जरजरजगगणाः सन्ति, तत्र एको लघुश्च भवति, तद्वृत्तं पञ्चचामरं नाम अवेहि।

---

১৭০। যাহার প্রত্যেক পাদ ক্রমশঃ দুইটী "ন" ও এক একটী "ম" "র" "স" "ল" ও "গ" গণে গঠিত এবং প্রথমতঃ ছয়, পরে চারি ও তৎপরে সাত অক্ষরে যতি থাকে, তাহা "হরি" নামে কথিত হয়।

১৭১। যাহার পাদগুলি যথাক্রমে "য" "ভ" "ন" "স" "ল" ও "গ" গণে গঠিত হয় এবং প্রথমতঃ চারি, পরে ছয়, তৎপরে সাত অক্ষরে যতি থাকে, তাহা "কান্তা' ছন্দ হইবে।

১৭২। যাহার পাদগুলি ক্রমশঃ "স" "স" "জ" "ভ" "জ" গণ পরে দুইটী গুরুবর্ণ দ্বারা গঠিত হয়, তাহাকে "অতিশায়িনী" ছন্দ কহে।

১৭৩। যাহার প্রতিপাদে যথাক্রমে "জ" "র" "জ" "র" "জ" 'গ' ও 'ল' গণ থাকে, তাহা "পঞ্চচামর" ছন্দঃ।

ऽ ऽ ऽऽ ऽ । । । । । ऽऽ । ऽ ऽ ऽ ऽ ऽ

क्रीड़त्कालिन्दीललितलहरी वारिभिर्दाक्षिणात्यै-

र्वातैः खेलद्भिः कुसुमितलतावेल्लिता मन्दमन्दम् ।

भृङ्गालीगीतैः किसलयकरोल्लासितैर्लास्यलक्ष्मीं

तन्वाना चेतो रभसतरलं चक्रपाणेश्चकार ॥

ग्राम्याब्जानूपं पिशितलवणं शुष्कशाकं नवान्नं

गौड़ं पिष्टान्नं दधि सकृशरं विज्जलं मद्यमम्लम् ।

धाना वल्लूरं समशनमथो गुर्वसात्म्यं विदाहि

स्वप्नञ्चारात्रौ श्वयथुगदवान् वर्ज्जयेदङ्गनाञ्च ॥

इति वैद्यके ।

न　ज　भ　ज　र　र

१७५ । नजभजरैस्तु रेफसहितैः शिवैर्हयैर्"नन्दनम् ।"

---

१७४ । स्यादिति ।—मतनयययगणघटितपादा कुसुमितलतावेल्लिता नाम वृत्ति-र्भवेत् । अत्र पञ्चमैः षष्ठैः सप्तमैश्च अक्षरैर्यतिः कर्त्तव्या ।

क्रीड़दिति ।—क्रीड़न्ति उच्छलन्ति यानि कालिन्द्याः यमुनायाः ललितलहरीणां मनोहरतरङ्गाणां वारीणि जलानि तैः सह खेलद्भिः चलद्भिः दाक्षिणात्यैः दक्षिण-दिग्भवैः वातैः वायुभिः मन्दमन्दं वेल्लिता कम्पिता भृङ्गालीनां भ्रमरसमूहानां यानि गीतानि गुञ्जनानि तैः किशलयं पल्लवमेव करः हस्तः तस्य उल्लसितैः सञ्चालनैः लास्यस्य नृत्यस्य लक्ष्मीं शोभां तन्वाना विस्तारयन्ती कुसुमसंजातानि अस्यां 'तारकादित्वात् इतच्' । कुसुमिता पुष्पिता लता चक्रपाणिः चक्रं पाणौ यस्य तस्य श्रीकृष्णस्य चेतः चित्तं रभसेन हर्षेण तरलं चञ्चलं 'रभसो वेगहर्षयोः' इति मेदिनी । चकार ।

---

অষ্টাদশাক্ষরা বৃত্তি ।

১৭৪ । যাহার প্রতিপাদে যথাক্রমে 'ম' 'ত' 'ন' ও তিনটী 'য' গণ থাকে এবং পঞ্চমাক্ষরে, পরে ষষ্ঠাক্ষরে ও তৎপর সপ্তমাক্ষরে যতি থাকে, তাহা "কুসুমিতলতাবেল্লিতা" ছন্দ হয় ।

I I IIS I S I I I S I S I S S I S

तरणिसुतातरङ्गपवनैः सलीलमान्दोलितं
मधुरिपुपादपङ्कजरजःसुपूतपृथ्वीतलम्।
सुरहरचित्रचेष्टितकलाकलापसंस्मारकं
क्षितितलनन्दनं व्रज सखे सुखाय वृन्दावनम्॥ (क)
अहृत धनेश्वरस्य युधि यः समेतमायोधनं
तमहमितो विलोक्य विबुधैः कृतोत्तमायोधनम्।
विभवमदेन निह्नुतह्रियातिमात्रसम्पत्तकं
व्यथयति सत्पथादधिगतार्थवेह सम्पन्नकम्॥ (ख) इति भट्टौ।

---

उदाहरणान्तरं—ग्राम्येति।—श्वयथुगदवान् शोथरोगाक्रान्तो जनः वक्ष्यमाणं वर्ज्जयेत्। यथा—पिशितं मांसं, पिशितञ्च लवणञ्च पिशितलवणं ग्राम्याब्जानूपं पिशितलवणं वर्ज्जयेदित्यर्थः। छागादिमांसं ग्राम्यं, कच्छपादिमांसं अब्जं, शूकरादिमांसं आनूपम्। लवणञ्च यत् पाकेन निष्पन्नं तत् ग्राम्यं, सामुद्रं करकचेति प्रसिद्धं यत् तत् अब्जं समुद्रतीरजं सम्भरीति प्रसिद्धं यत् तदपि आनूपम्। शुष्कशाकं नवान्नं गौड़ं गुड़विकारं, पिष्टान्नं पिष्टकं सकृशरं कृशरास्तिलतण्डुलादिकृतानि लड्डुकादिद्रव्याणि तत्सहितं तदेव वर्ज्जयेदित्यर्थः। तथा दधि, विज्जलं पिच्छिलद्रव्यं पूतिकादिशाकम्, मद्यं, अम्लं, धाना अङ्कुरितभृष्टयवान्। वल्लूरं शुष्कमांसं, समसनं गुरु दुष्पचम्। असात्म्यं असह्यं विदाहि दग्धं अरात्रौ दिवसे स्वप्नं निद्रां अङ्गनां स्त्रियञ्च वर्ज्जयेदिति पूर्ववदन्वयः।

१७५। नजभेति।—नजभजररगणैर्घटितपादं नन्दनं नाम वृत्तं भवति। अत्र एकादशैः सप्तमैश्चाक्षरैर्यतिः कर्त्तव्या।

---

১৭৫। যাহার প্রতিপাদে যথাক্রমে 'ন' 'জ' 'ভ' 'জ' ও দুইটী 'র' গণ থাকে এবং একাদশাক্ষরেও সপ্তমাক্ষরে যতি থাকে, তাহা 'নন্দন' ছন্দ হয়।

न न र र र र

१७६ । इह ननरचतुष्कसृष्टन्तु "नाराच"माचक्षते ।

। । । । । । ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ

दिनकरतनयातटीकानने चारुसञ्चारिणी

स्वयानिकटजाष्टमेघोघया कृष्ण राधा त्वयि ।

ननु विकिरति नैलनाराचमेषातिहृच्छेदनं

तदिह मदनविभ्रमोद्भ्रान्तचित्तावधत्स्व द्रुतम् ॥ (क)

---

तरणीति ।—हे सखे ! तरणिसुता यमुना तस्यास्तरङ्गपवनैः तरङ्गसंसर्गिवायुभिः लीलया सह वर्त्तमानं सलीलं तद्यथा स्यात् तथा आन्दोलितं उपवीजितं, मधुरिपुः श्रीकृष्णः तस्य पादपङ्कजरजोभिः पादपद्मपरागैः सुपूतं पवित्रीकृतं पृथ्वीतलं भूमिभागो यत्र तत्, मुरहरस्य श्रीकृष्णस्य यानि चित्राणि अद्भुतानि चेष्टितानि कंसादिदानव-कुलध्वंसगोवर्द्धनगिरिधारणादीनि कर्म्माणि एवं कलाः नृत्यगीतवंशीवादनादिचतुःषष्टि-विद्याः तासां कलापस्य समूहस्य संचारकं अभिज्ञापकं क्षितितलनन्दनं क्षितितले पृथिव्यां नन्दनं स्वर्गीयकाननमिव वृन्दावनं सुखाय सुखभोगाय व्रज ।

उदाहरणान्तरं—भट्टिश्लोकमुपन्यस्यति—अहृतेति । यः युधि समरे समीता अवलम्बिता माया येन सः समीतमायः मायावीत्यर्थः । धनेश्वरस्य धनं अहृत हृतवान् । तं विबुधैः देवैः सह कृतं समायुधं कृतमहायुद्धं निह्नुता गुप्ता व्रीलज्जा येन तथा-भूतेन लज्जारहितेनेत्यर्थः, ऐश्वर्य्यमत्ततया अतिमानं सातिशयं सम्पन्नकं युक्तं तं रावणं विलोक्य अहं इतः आगतः । विभववत्तो निर्लज्जो भवतीति प्रतिपादयितुमर्थान्तर-मुपन्यस्यति—व्यथयतीत्यादि । अथवा यतः लोके सम्पद् ऐश्वर्य्यं अधिगता लब्धा सती कं जनं सत्पथात् न व्यथयति न चालयति । व्यथदुःखभयचलनयोरिति गणपाठात् व्यथधातुरत्र चलनार्थः ।

१७६ । इहेति ।—नगणद्वयेन रगणचतुष्केण च ग्रथितं नाराचं नाम वृत्तं आचक्षते कथयन्ति । अस्य महामालिनीत्यपि नाम । यदिह नयुगलं ततो वेदरेफै-र्महामालिनीति मल्लिनाथेन माघटीकायां लक्षणं प्रदर्शितम् ।

रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियां
प्रियसुहृदि विभीषणे संक्रमय्य श्रियं वैरिणः।
रविसुतसहितेन तेनानुयातः ससौमित्रिणा
भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम्॥ (ख)

इति रघौ।

म भ न त ग ग य य

१७७। मन्दाक्रान्ता नयुगलजठरा कीर्त्तिता "चित्रलेखा।"

---

दिनकरेति।—ननु सम्बोधने। हे कृष्ण! दिनकरतनया यमुना तस्यास्तटीवर्त्ति तीरस्थितकानने चारुसञ्चारिणी मनोहरगामिनी एणस्य ईक्षणे इव ईक्षणे यस्याः सा एणाक्षी मृगलोचना एषा राधा, श्रवणनिकटकृष्टं कर्णपर्य्यन्तमाकृष्टं अतिहृच्छेदं अतिशयेन हृदयविदारकं नेत्रनाराचं चक्षुरूपास्त्रविशेषं, त्वयि विकिरति क्षिपति। हे मदनविभ्रमोद्भ्रान्तचित्त! मदनात् कामात् यो विभ्रमः भ्रान्तिः तेन उद्भ्रान्तं चित्तं यस्य तत्सम्बोधने। तत तस्मात् हेतोः इह अस्मिन् समये अवधत्स्व सावधानो भव। अवपूर्व्वकस्य धाधातोर्लोटि स्वे रूपम्। अलङ्कारोऽत्र रूपकम् उपमा च।

अन्यच्च रघुपतिरिति।—रघुपतिरपि श्रीरामचन्द्रोऽपि जातवेदसि वह्नौ विशुद्धां परीक्षया निष्कलङ्कां प्रियां जानकीं प्रगृह्य प्रियसुहृदि विभीषणे वैरिणः शत्रोः रावणस्य श्रियं राजलक्ष्मीं सङ्क्रमय्य समर्प्य रविसुतसहितेन सुग्रीवान्वितेन सुमित्राया अपत्यं सौमित्रिः लक्ष्मणः तेन सह वर्त्तमानस्तेन ससौमित्रिणा तेन विभीषणेन अनुयातः अन्वितः भुजेन भुजबलेन विजितं यत् विमानरत्नं श्रेष्ठं व्योमयानं पुष्पकमित्यर्थः, तत् अधिरूढः सन् पुरीं अयोध्यानगरीं प्रतस्थे जगाम। समवप्रविभ्यः इति स्थादित्वादात्मनेपदम्।

---

১৭৬। যাহার প্রতিপাদে যথাক্রমে দুইটী 'ন' ও চারিটী 'র' গণ থাকে, তাহাকে "নারাচ" ছন্দ কহে।

S S S S । । । । । । S S । S S । S S

शङ्केऽमुष्मिन् जगति मृगदृशां साररूपं यदासी-
दाकृष्येदं व्रजयुवतिसभा वेधसा सा व्यधायि ।
नैतादृक् चेत् कथमुदधिसुतामन्तरेणाच्युतस्य
प्रीतन्तस्यां नयनयुगमभूच्चित्रलेखाङ्गितायाम् ॥

म　भ　न　य　त　य

१९८ । मः भो जः सतभा दिनेशऋतुभिः "शार्दूललिलितम् ।"

---

१७७ । मन्दाक्रान्तेति ।—मन्दाक्रान्तालक्षणं पूर्व्वमुक्तम् । सा मन्दाक्रान्ता, नयुगलं नगणद्वयं जठरे मध्ये यस्याः तादृशी सती चित्रलेखा कीर्त्तिता कथिता । मन्दाक्रान्तायां क्रमेण पञ्चैवाक्षराणि लघूनि निवध्यन्ते तदन्तेऽपि पुनरेकमक्षरं लघु चेत् चित्रलेखा नाम वृत्तम्भवेदित्यर्थः ।

उदाहरणं—शङ्के इति । अमुष्मिन् जगति मृगदृशां मृगाक्षीणां स्त्रीणां यत् साररूपं अतिसौन्दर्य्यं आसीत् इदं साररूपं आकृष्य संगृह्य वेधसा विधात्रा सा व्रजयुवतिसभा व्रजाङ्गनाकुलं व्यधायि निर्म्मिता इति अहं शङ्के विवेचयामि, चेत् यदि एतादृक् न एवम्प्रकारो न स्यात् तदा कथं उदधिसुतामन्तरेण लक्ष्मीं विना चित्र-लेखाङ्गितायां पटे चित्रितवत् आश्चर्य्यरूपायां तस्यां व्रजयुवतिसभायां . अच्युतस्य श्रीकृष्णस्य नयनयुगं प्रीतं परिवृप्तमभूत् । लक्ष्मीतोऽपि व्रजाङ्गनानां सौन्दर्य्यमधिकमिति श्रीकृष्णस्तासु समासक्त आसीदिति भावः ।

---

১৭৭। মন্দাক্রান্তা ছন্দের অপরাংশ তুল্য থাকিয়া যদি মধ্যে দুইটী 'ন'গণ সন্নিবিষ্ট হয়, তবে তাহা 'চিত্রলেখা' নামে কথিত হয়। (অর্থাৎ যাহার প্রতিপাদে যথাক্রমে 'ম' 'ভ' 'ন' 'ন' 'গ' 'গ' য' য' এই গণগুলি সন্নিবিষ্ট হয়, তাহাই উক্ত ছন্দ। এই নিয়মেই 'ভ' গণের দুইটী লঘু ও পরে নগণের একটী লঘু লইয়া দুইটী 'ন' গণ সন্নিবিষ্ট হইল।)

ऽ ऽ ऽ। । ऽ । ऽ । । । ऽ ऽ ऽ । । । ऽ

कृत्वा कंसमृगे पराक्रमविधिं शार्दूलललितम्
यश्चक्रे क्षितिभारकारिषु दरं चैद्यप्रभृतिषु।
सन्तोषं परमन्तु देवनिवहे त्रैलोक्यशरणं
श्रेयो नः स तनोत्वपारमहिमा लक्ष्मीप्रियतमः॥

१७९। मात् सौ जौ भरसंयुतौ करिवाणखैः "हरिणप्लुता।"

---

१७८। म इति।—क्रमेण मसजसतसगणनिवद्धं दिनेशऋतुभिः द्वादशैः षड्भि-श्चाक्षरैर्विच्छिन्नं शार्दूललालितं नाम वृत्तम्भवेत्।

उदाहरति—कृत्वेति।—श्रीकृष्णः कंसरूपो मृगः तस्मिन् शार्दूलललितं व्याघ्रवत् रमणीयं पराक्रमविधिं आक्रमणव्यापारं कृत्वा क्षितिभारकारिषु क्षितेः पृथिव्याः भारं कर्तुं शीलं येषां तेषु चैद्यप्रभृतिषु शिशुपालप्रभृतिषु दरं त्रासं देवनिवहे देवसमूहे तु परमं सन्तोषं चक्रे उत्पादयामास, सः त्रैलोक्यशरणं त्रिजगत्पालकः अपारमहिमा नास्ति पारः सीमा यस्य तादृशः महिमा महत्त्वं यस्य सः लक्ष्मीप्रियतमो लक्ष्मीपतिः श्रीकृष्णः नः अस्माकं श्रेयः मङ्गलं तनोतु विस्तारयतु।

१७९। मादिति। यत्र क्रमेण मसजयुगलभरगणाः सन्निविशन्ते अष्टमैः पञ्चमैः शेषाक्षरैश्च यतिः तत् हरिणप्लुता नाम वृत्तम्भवेत्।

---

১৭৮। যে ছন্দে প্রতিপাদে যথাক্রমে 'ম' 'স' 'জ' 'স' 'ত' 'স' এই গণগুলি সন্নিবিষ্ট হয় এবং দ্বাদশাক্ষরে ও ষষ্ঠাক্ষরে যতি থাকে, তাহা 'শার্দূললালিত' ছন্দ হয়।

১৭৯। যাহার প্রতিপাদে যথাক্রমে 'ম' 'স', দুইটী 'জ', একটী 'ভ' ও একটী 'র' গণ সন্নিবিষ্ট হয়। এবং অষ্টমাক্ষরে পঞ্চমাক্ষরে পরে দশমাক্ষরে যতি থাকে, তাহা "হরিণপ্লুতা" ছন্দ হয়।

१८० । पञ्चभकारयुता-"ऽश्वगति"र्यदिचान्त्यसरचिता ।

१८१ । "सुधा" तर्कैस्तर्कैर्भवति ऋतुभिर्यौ मो नसतसाः ।

१८२ । वर्णाश्वैर्मननततमकैः कीर्त्तिता "चित्रलेखे"यम् ।

१८३ । भाद् रनना नसौ "भ्रमरपदक"मिदमभिहितम् ।

१८४ । "शार्दूलं" वद मासषट्कयति मः सो जसौ रो मश्चेत् ।

---

१८० । पञ्चेति ।—यत्र क्रमेण पञ्च भकारास्तत एकः सकारः सा अश्वगतिः ।

१८१ । सुधेति ।—यत्र क्रमेण यमनसतसगणा भवन्ति प्रतिषष्ठाक्षरञ्च यतिः सा सुधानाम भवति ।

१८२ । वर्णाश्वैरिति ।—यत्र क्रमेण मनयुगलतयुगलमकाराः सन्निवेश्यन्ते, आदौ चतुर्भिः ततश्च सप्तभिः यतिः स्यात्, सा चित्रलेखा नाम छन्दो भवति ।

१८३ । यत्र प्रतिपादं क्रमेण भरनत्रितयसगणाः सन्निविष्टाः स्युः, तदिदं भ्रमरपदकं नाम अभिहितम् ।

१८४ । यदि मसजसरमगणाः क्रमेण स्युः द्वादशाक्षरैः षष्ठाक्षरैश्च यतिः, तदा तत् वृत्तं शार्द्दूलं नाम वद ।

---

১৮০। যাহার প্রতিপাদে যথাক্রমে পাঁচটী 'ভ' পরে একটী 'স'গণ থাকে, তাহা "অশ্বগতি" ছন্দঃ।

১৮১। যাহার প্রতিপাদে যথাক্রমে 'য' 'ন' 'স' 'ত' 'স' গণ এবং প্রতি ষষ্ঠাক্ষরে যতি থাকে, তাহা "সুধা" ছন্দঃ।

১৮২। যাহার প্রতিপাদ ক্রমশঃ একটি 'ম' দুইটী 'ন' দুইটী ত, একটী ম গণ দ্বারা গঠিত হয়, এবং একাদশ ও সপ্তমাক্ষরে যতি থাকে, তাহা "চিত্রলেখা" নামে কথিত হয়।

১৮৩। যাহার প্রতিপাদে 'ভ', 'র', তিনটী 'ন' ও একটী 'স' গণ থাকে, তাহা "ভ্রমরপদক" নামে কথিত হয়।

१८५ । अर्थाब्ध्याश्वैर्मभनयरयुगैर्वृत्तं मतं "केसरम् ।"

१८६ । म्भौ न्जौ भ्रौ चे-"चल"मिदमुदितं युगैर्मुनिभिः स्वरैः।

१८७ । सैका वसुविरतिस्तनौ रैश्चतुर्भिर्युता "लालसा ।"

१८८ । भवति नयुगलं रभौ रौ दशभि "र्गजेन्द्रलता ।"

---

१८५ । यत्र क्रमेण मभनयरयुगलानि सन्निविष्टानि स्युः, तद्वृत्तं केसरं नाम मतं बुधैरिति शेषः ।

१८६ । यत्र क्रमेण मभनजभरगणाः स्युः चतुर्थैः सप्तमैः सप्तमैश्च अक्षरैः यतिः तदा तदिदं वृत्तं चलं नाम उदितम् ।

१८७ । यत्र क्रमेण तनरचतुष्कानि सन्निवेश्यन्ते, अष्टमाक्षरेण एका यतिः स्यात्, तत् लालसा नाम वृत्तं भवति ।

१८८ । यत्र नयुगलरभरयुगलानि स्युः दशमाक्षरैश्च यतिः, तत् गजेन्द्रलतानाम वृत्तं भवति ।

---

১৮৪। যাহার প্রতিপাদ ক্রমে 'ম' 'স' 'জ' 'স' 'র' ও 'ম' গণ দ্বারা গ্রথিত এবং দ্বাদশাক্ষরে ও ষষ্ঠাক্ষরে যতি থাকে, উহা "শার্দ্দূল" ছন্দঃ।

১৮৫। যাহার প্রতিপাদে ক্রমে 'ম' 'ভ' 'ন' য ও দুইটী 'র' গণ থাকে, এবং চারি অক্ষরে পরে সাত সাত অক্ষরে যতি থাকে, তাহা "কেসর" নামে কথিত হয়।

১৮৬। যাহার প্রতিপাদে ক্রমে 'ম' 'ভ' 'ন' 'জ' 'ভ' 'র'—এই গণগুলি সন্নিবিষ্ট হয় এবং চারি অক্ষরে পরে সাত সাত অক্ষরে যতি থাকে, তাহা "চল" নামে কথিত হয়।

১৮৭। যাহার প্রতিপাদে ক্রমে 'ত' 'ন' ও চারিটী 'র' গণ সন্নিবিষ্ট হয় এবং অষ্টমাক্ষরে যতি থাকে, তাহা "লালসা" নামক ছন্দ হয়।

१८९ । तज्ज्ञूतत्वंश्चे मौं भ्मौ विरतिश्चेत् "सिंहविस्फूर्जितं" यौ ।
१९० । सौं जजौ भरसंयुतौ करिवाणखे "हरनर्त्तनम् ।"
१९१ । इदं "क्रीड़ाचक्र" सदोर्घं समस्तैर्यकारैः समेतम् ।
१९२ । वेदाङ्गान्तैर्मभनययुगैः स्यादियं "चन्द्रलेखा ।"

---

१८९ । यत्र आदौ द्वौ मगणौ ततो भमगणौ ततश्च यगणद्वयं पञ्चमैः षष्ठैः सप्तमैश्च यतिः, तदा तत् सिंहविस्फूर्ज्जितं नाम वृत्तं भवति ।

१९० । यत्र रसजयुगलभरगणाः क्रमेण भवन्ति, अष्टमैः पञ्चमैः शेषैश्च अक्षरैः यतिः स्यात्, तत् हरनर्त्तनं नाम वृत्तम् स्यात् ।

१९१ । यत्र क्रमेण एको यगणस्तत एको मगण. ततः समस्ता एव यकाराः सन्निविश्यन्ते तदिदं वृत्तं क्रीड़ाचक्रं नाम भवति ।

१९२ । यत्र क्रमेण मभनयवयाणि सन्निविश्यन्ते, चतुर्थैः सप्तमैश्च यतिः क्रियते, तदा इयं चन्द्रलेखा नाम वृत्तं भवति ।

---

১৮৮। যাহার প্রতিপাদ ক্রমে দুইটী 'ন' এক একটী 'র' 'ভ' ও দুইটী 'র'গণ দ্বারা গ্রথিত এবং দশমাক্ষরে যতি থাকে, তাহা 'গজেন্দ্রলতা' ছন্দ হয়।

১৮৯। যাহার প্রতিপাদে ক্রমে দুইটী 'ম' গণ, এক একটী ভ' 'ম' ও দুই, 'য'গণ সন্নিবিষ্ট থাকে এবং পঞ্চমাক্ষরে ষষ্ঠাক্ষরে ও সপ্তমাক্ষরে যতি থাকে, তাহা 'সিংহবিস্ফূর্জ্জিত' ছন্দ হয়।

১৯০। যাহার প্রতিপাদে ক্রমে এক একটী 'র' 'স', দুইটী 'জ', একটী 'ভ' ও 'র' গণ সন্নিবিষ্ট হয় এবং অষ্টমাক্ষরে পঞ্চমাক্ষরে পরে শেষাক্ষরে যতি থাকে, তাহা "হরনর্ত্তন" ছন্দ হয়।

১৯১। যাহার প্রতিপাদে ক্রমে 'য' 'ম' ও চারিটী 'য' গণ সন্নিবিষ্ট থাকে, তাহা "ক্রীড়াচক্র" ছন্দ হয়।

১৯২। প্রতিপাদে ক্রমে 'ম' 'ভ' 'ন' ও তিনটী 'য' গণ এবং চারি অক্ষরে ও সপ্তাক্ষরে যতি থাকিলে, তাহা 'চন্দ্রলেখা' ছন্দ হয়।

१९३। "हीरक"मुदितं भसनजनैरिह रगणोऽन्ततः।

इति वृत्तरत्नाकरपरिशिष्टे।

—*—

अतिधृतिः ( ऊनविंशत्यक्षरा वृत्तिः )।

य म न स र र ग

१९४। रसर्त्वश्वैर्य्मौ न्सौ ररगुरुयुतौ "मेघविस्फूर्जिता" स्यात्।

। ऽऽ ऽ ऽ ऽ । । । । । ऽ ऽ । ऽ ऽ । ऽ ऽ

कदम्बामोदाढ्या विपिनपवनाः केकिनः कान्तकेकाः

विनिद्राः कन्दल्यो दिशि दिशि मुदा दर्दुरा दृप्तनादाः।

निशान्नृत्यद्विद्युद्विलसितलसन्मेघविस्फूर्जिता चेत्

प्रियः स्वाधीनोऽसौ दनुजदलनो राज्यमस्मात् किमन्यत्। (क)

---

१९३। यत्र क्रमेण भसनजनरगणाः स्युः, तत् हीरकं नाम वृत्तं उदितं छन्दोविद्भिरिति शेषः।

१९४। रसेति।—यस्याः पादे यगणमगणौ नगणसगणौ रगणद्वयं एको गुरुश्च एतानि क्रमात् स्युः, रसैः षड्भिः ऋतुभिः षड्भिः अश्वैः सप्तभिश्च अक्षरैः विच्छिन्नं, तत् मेघविस्फूर्जितानाम वृत्तं स्यात्।

कदम्बेति।—विपिनपवनाः वनानिलाः कदम्बामोदाढ्याः कदम्बानां कदम्बकुसुमानां आमोदेन सौरभेण आढ्या युक्ताः, केका विद्यते एषामिति केकिनो मयूराः, "केका वाणी मयूरस्ये"ति अमरः। कान्ता मनोहरा केका ध्वनिर्येषां ते कान्तकेकाः, कन्दल्यः भूमिकदलीविशेषाः, विनिद्राः विगता निद्रा मुद्रणं येषां ते प्रस्फुटिता इत्यर्थः। दिशि दिशि दर्दुरा मण्डूका मुदा आनन्देन दृप्तनादाः दृप्त उद्धतः नादो येषां तथाभूताः निशा रात्रिः नृत्यन्तीनां स्फुरन्तीनां विद्युतां विलसितेन स्फुरणेन लसत् स्फुरत् मेघानां

---

১৯৩। যাহার প্রতিপাদে ক্রমে 'ভ' 'স' 'ন' 'জ' 'ন' ও 'র' গণ সন্নিবদ্ধ থাকে, তাহা "হীরক" নামে কথিত হয়।

उदञ्चत्कावेरीलहरिषु परिष्वङ्गरङ्गे लुठन्तः
कुहूकण्ठीकण्ठीरवरववलास्सितप्रोषितेभाः ।
अमी चैत्रे मैत्रावरुणितरुणी-केलिकङ्केल्लिमल्ली-
चलद्वल्लीहल्लीसकसुरभयश्चण्डि चञ्चन्ति वाताः ॥ (ख)

इति कस्यचित् ।

---

विस्फूर्जितं निर्घोषो यस्याः तथाभूता । चेद् यदि एवम्भूतसमये प्रियः कान्तः असौ दनुजदलनः श्रीकृष्णः स्वाधीनः स्वेच्छावशवर्त्ती स्यात्, तदा अस्मात् एवं समये प्रियसमागमात् अन्यत् राज्यं राजत्वसुखं किं न किमपीत्यर्थः । व्रजाङ्गनां प्रति व्रजाङ्गनाया उक्तिरियम् ।

अन्यच्च उदञ्चदिति ।—हे चण्डि ! अतिकोपने ! "चण्डस्त्वत्यन्तकोपन" इत्यमरः । चैत्रे चैत्राख्ये मासि उदञ्चन्त्यः उच्छलन्त्यः उद्गच्छन्त्य इति यावत्, कावेर्य्या नद्या या लहर्य्यस्तरङ्गाः तासु, परिष्वङ्गः संसर्ग एव रङ्गः नृत्यक्रीडा तत्र तन्निमित्तमित्यर्थः, लुठन्तः अनेन वातानां शैत्यं सूचितम् । कुहूरवाः कण्ठे यस्याः सा कुहूकण्ठी कोकिला । "कोकिलः कलकण्ठः स्यात् कुहूकण्ठः कुहूमुख" इति शब्दरत्नावली । सैव कण्ठीरवः सिंहः । 'कण्ठीरवस्तु पारीन्द्रः केशरी'ति हारावली । तस्य रवलवेन शब्दकणेन वासिताः भीतिं प्रापिताः प्रोषिता विरहिण एव इभाः करिणः यैः तादृशाः । एतेन वातानां मान्द्यं सूचितम् । मैत्रावरुणिरगस्त्यः तस्य तरुणी पत्नी लोपामुद्रा तस्याः केलिकङ्केल्लिः क्रीडाशोकतरुः, मल्ली मल्लिका, चलद्वल्ली चञ्चला लता तासां हल्लीसकं मण्डलाकारं नर्त्तनं कम्पनमित्यर्थः । तेन सुरभयः सुगन्धाः । अनेन सौगन्ध्यं । अमी एते एवं गुणशालिनः वायवः चञ्चन्ति वहन्ति । अधुना तव मानत्यागो विधेय इति । 'मण्डलेन तु यन्नृत्यं स्त्रीणां हल्लीसकन्तु तदि'ति ।

---

১৯৪। যাহার প্রতিপাদে 'য' 'ম' 'ন' 'স' দুইটি 'র' এবং একটি গুরুবর্ণ থাকে ও প্রতি ছয় ছয় অক্ষরে পরে সপ্তমাক্ষরে যতি থাকে, তাহা 'মেঘবিস্ফূর্জ্জিতা' ছন্দ হয় ।

य म न स त त ग

१९५। भवेत् सैव "छाया" तयुगगयुता स्याद् द्वादशान्ते यदा।

। ऽ ऽ ऽ ऽ ऽ । । । । । ऽ ऽ । ऽ ऽ । ऽ

अभीष्टं जुष्टो यो वितरति लसद्दोश्चारुशाखोज्ज्वलः
स्फुरन्नानारत्नस्तवकिततनुश्चित्रांशुकालम्बितः।
न यस्याङ्घ्रिच्छायामुपगतवतां संसारतीव्रातप-
स्तनोति प्रोत्तापं स जगदवतात् कंसारिकल्पद्रुमः॥

म स ज स त त ग

१९६। सूर्य्याश्वैर्मसजस्तताः सगुरवः "शार्दूलविक्रीड़ितम्।"

---

१९५। भवेदिति। सा मेघविस्फूर्जिता एव यदा द्वादशान्ते द्वादशाक्षरावसाने तयुगगयुता भवेत् तदा छाया नाम स्यात्।

अभीष्टमिति। लसन्तः शोभमानाः दोषः भुजा एव चारुशाखाः ताभिः उज्ज्वलः शोभमानः स्फुरद्भिः उज्ज्वलैः नानारत्नैः स्तवकिता गुच्छान्विता तनुः शरीरं यस्य चित्रं विचित्रं यत् वसनं वस्त्रं तदालम्बितः परिहितविचित्राम्बर इत्यर्थः। यः कंसारि-कल्पद्रुमः कंसारिः श्रीकृष्णः स एव कल्पद्रुमः कल्पवृक्षः। जुष्टः आराधितः सन् अभीष्टं इच्छानुरूपं फलं वितरति ददाति। यस्य कंसारिकल्पद्रुमस्य अङ्घ्रेः पादस्य छायां उपगतवतां आश्रितवतां भक्तजनानां संसाररूपो यस्तीव्रातपः प्रचण्डरौद्रं सः प्रोत्तापं सन्तापं न ददाति तनोति उत्पादयति; सः कंसारिकल्पद्रुमः जगत् विश्वं अवतात् रक्षतु।

१९६। सूर्य्याश्वैरिति। द्वादशैः सप्तमैश्चाक्षरैः विच्छिन्नं शार्दूलविक्रीड़ितं नाम वृत्तं स्यात्। अत्र मसजसततगणानन्तरं एकमक्षरं गुरु स्यात्।

---

১৯৫। পূর্ব্বোক্ত মেঘবিস্ফূর্জ্জিতা ছন্দের সহিত অপরাংশে সাম্য থাকিয়া যদি দুইটী 'ত' গণ ও একটি গুরুবর্ণ-সন্নিবেশহেতু বৈসাদৃশ্য ঘটে এবং দ্বাদশ অক্ষরে যতি থাকে, তবে 'ছায়া' ছন্দ হয়।

ऽ ऽ ऽ । । ऽ । ऽ । । । ऽ ऽ ऽ । ऽ ऽ । ऽ

गोविन्दं प्रणमोत्तमाङ्ग रसने तं घोषयाहर्निशं

पाणी पूजयतं मनः स्मर पदे तस्यालयं गच्छतम्।

एवञ्चेत् कुरुथाखिलं मम हितं शीर्षादयस्तद् ध्रुवं

न प्रेक्षे भवतां कृते भवमहाशार्दूलविक्रीड़ितम्॥

म र भ न य न ग

१८७। स्रौं भ्नौ यो नो गुरुश्चेत् स्वरमुनिकरणैराह "सुरसाम्।"

ऽ ऽ ऽ ऽ । ऽ ऽ । । । । । । ऽ ऽ । । । ऽ

कामक्रीड़ासतृष्णो मधुसमयसमारम्भरभसात्

कालिन्दीकूलकुञ्जे विहरणकुतुकाक्रान्तहृदयः।

---

गोविन्दमिति। हे उत्तमाङ्ग मस्तक! गोविन्दं श्रीकृष्णं प्रणम। 'उत्तमाङ्गं शिरः शीर्षं मूर्द्धा ना मस्तकोऽस्त्रिया'मित्यमरः। हे रसने जिह्वे! तं गोविन्दं अहर्निशं सर्व्वदा घोषय उच्चारय। हे पाणी हस्तौ! युवां तं गोविन्दं पूजयतं अर्च्चयतं, चुरादिगणीयपूजधातोर्लोटि मध्यमपुरुषद्विवचने रूपम्। हे मनः चित्त! तं स्मर चिन्तय। हे पदे चरणौ! तस्य गोविन्दस्य आलयं स्थानं गच्छतम्। हे शीर्षादयः उत्तमाङ्गादयः! यूयं चेत् यदि एवं एवम्प्रकारं अखिलं समस्तं मम हितं शुभजनकं कर्म्म कुरुथ, तत् तदा भवतां युष्माकं कृते निमित्तेन भवः संसाररूपो यः महाशार्दूलः दुरन्तव्याघ्रः तस्य विक्रीड़ितं आक्रमणादिचेष्टां ध्रुवं निश्चितं न प्रेक्षे विलोकयामि।

१८७ स्राविति।—मरभनयनगघटितां सुरसां नाम वृत्तमाह कथयति। अत्र स्वरैः सप्तमैः मुनिभिः सप्तमैः करणैः पञ्चमैश्च अक्षरैर्यतिः कर्त्तव्या।

---

১৯৬। যাহার প্রতিপাদে ক্রমে 'ম' 'স' 'জ' 'স' ও দুইটী 'ত' গণ এবং একটী গুরুবর্ণ সন্নিবিষ্ট হয় এবং দ্বাদশাক্ষরে পরে সপ্তমাক্ষরে যতি থাকে, তাহা "শার্দ্দূলবিক্রীড়িত" ছন্দঃ।

गोविन्दो वल्लवीनामधररससुधां प्राप्य सुरसां
शङ्के पीयूषपानैः प्रचुरकृतसुखं व्यस्मरदसौ ॥
म ग ग न न त त ग ग

१९८। मो गौ नौ तौ गौ शरहयतुरगैः "फुल्लदाम" प्रसिद्धम्।
शश्वल्लोकानां प्रकटितकदनं ध्वस्तमालोक्य कंसं
हृष्यच्चेतोभिस्त्रिदिववसतिभिर्व्योमसंस्थैर्विमुक्तम्।
सुग्धामोदेन स्थगितदशदिगाभोगमाहूतभृङ्गं
मौलौ दैत्यारेन्र्यपतदनुपमं स्वस्तरोः फुल्लदाम॥

---

कामीति।—मधुसमयः वसन्तसमयः तस्य समारम्भेण उदयेन यः रभसः हर्षः तस्मात् कामक्रीड़ायां सुरते सतृष्णः अभिलाषी, कालिन्दीकूलकुञ्जे यमुनातटवने। विहरणकुतुकाक्रान्तहृदयः विहारामोदव्याकुलचित्तः असौ गोविन्दः श्रीकृष्णः, सुरसां मधुरास्वादां वल्लवीनां गोपीनां अधरसुधां प्राप्य, पीयूषपानैः सुधापानैः प्रचुरकृतसुखं पूर्व्वानुभूतामृतपानजनितानन्दं व्यस्मरत् विस्मृतवान् इत्यहं शङ्के मन्ये। कथमन्यथा गोपीनामधरपाने एवमासक्तः श्रीगोविन्द इति।

१९८। मो गाविति।—मगगननततगगघटितं फुल्लदाम नाम प्रसिद्धं वृत्तं भवति। अत्र शरैः पञ्चमैः हयैः सप्तमैः तुरगैः सप्तमैश्चाचरैर्यतिः कर्त्तव्या।

शश्वदिति।—शश्वत् नित्यं लोकानां प्रकटितं कृतं कदनं कष्टं येन तं कंसं कंसनामानमसुरं ध्वस्तं विनष्टं आलोक्य दृष्ट्वा हृष्यच्चेतोभिः हृष्यत् आनन्दितं चेतश्चित्तं येषां तैः, त्रिदिववसतिभिः स्वर्गवासिभिः देवैरित्यर्थः, व्योमसंस्थैः आकाश-मण्डले स्थितैः सद्भिः विमुक्तं दृष्टं सुग्धामोदेन रमणीयसौगन्ध्येन स्थगितः

---

১৯৭। যে ছন্দে প্রতিপাদে ক্রমশঃ 'ম' 'র' 'ভ' 'ন' 'য' 'ন' ও একটী গুরুবর্ণ সন্নিবিষ্ট হয় এবং সপ্তমাক্ষরে ও পঞ্চমাক্ষরে যতি থাকে, তাহাকে "সুরসা" ছন্দ কহে।

१९९ । नयुगलगलघू निरन्तरौ यदा स "पञ्चचामरः ।"

२०० । वृत्तं "विम्बाख्य" मरमुनितुरगैर्म तौ नसौ ततौ चेद्गुरुः ।

२०१ । रसैः षड्भिर्लोकैर्यमनसजजा गुरु "र्मकरन्दिका ।"

---

आच्छादितः दशानां दिशां आभोगः विस्तारः येन तथाभूतं । "आभोगः परिपूर्णता" त्यमरः । अतएव आहृता आकृष्टा भृङ्गा भ्रमरा येन तथाभूतं अनुपमं उपमारहितं, स्वस्तरोः स्वर्गीयवृक्षस्य पारिजातस्य फुल्लदाम विकसितपुष्पमाला, दैत्यारेः श्रीकृष्णस्य मौलौ मस्तके न्यपतत् निपतितम् ।

१९९ । यत्र प्रतिपादं क्रमेण नयुगलं गकारौ लघुश्च निरन्तरतया वर्तन्ते तदा स पञ्चचामरः स्यात् ।

२०० । यत्र क्रमेण म त न स त त गणाः एको गुरुश्च पञ्चमैः सप्तमैः सप्तमैश्च यतिः, तद्वृत्तं विम्बं नाम भवति ।

२०१ । यत्र क्रमेण यमनसजजगणा एको गुरुश्च षड्भिः षड्भिः सप्तभिश्च अक्षरैर्यतिः सा मकरन्दिका नाम भवति ।

---

১৯৮। যে ছন্দে ক্রমশঃ একটী 'ম', দুইটী করিয়া 'গ' 'ন' 'ত' ও 'গ' গণ সন্নিবিষ্ট হয় এবং পঞ্চমাক্ষরে ও সপ্তমাক্ষরে যতি থাকে, তাহা "ফুল্লদাম" নামে প্রসিদ্ধ।

১৯৯। যে ছন্দে প্রতিপাদে প্রথমতঃ দুইটী 'ন' গণ এবং পরে গুরু লঘু একবর্ণান্তরে ( অর্থাৎ একটী দীর্ঘ তৎপর একটী হ্রস্ব এইরূপে ) সন্নিবিষ্ট হইবে, তাহা "পঞ্চচামর" ছন্দঃ।

২০০। যে ছন্দে প্রতিপাদে ক্রমশঃ 'ম' 'ত' 'ন' 'স' 'ত' 'ত' এবং একটী গুরুবর্ণ সন্নিবিষ্ট হয় এবং পঞ্চম সপ্তম ও সপ্তমাক্ষরে যতি থাকে তাহা ".বম্ব" নামক বৃত্ত।

२०२ । इनाश्वैः स्याद् यभनयजजगाः कीर्त्तिता "मणिमञ्जरी।"
२०३ । गजाब्धितुरगैर्जसौ जसतभा गश्चेत् "समुद्रतता।"

इति वृत्तरत्नाकरपरिशिष्टे।

---

कृतिः। ( विंशत्यक्षरा वृत्तिः )।

म र भ न य भ ल ग
२०४ । ज्ञेया सप्ताश्वषड्भिर्मरभनययुता भ्लौ गः "सुवदना।"
ऽऽ ऽऽ ।ऽऽ ।। ।।। । ऽ ऽऽ।।।ऽ
प्रत्याहृत्येन्द्रियाणि त्वदितरविषयान्नासाग्रनयना
त्वां ध्यायन्ती निकुञ्जे परतरपुरुषं हर्षोत्थपुलका।

---

२०२। यत्र क्रमेण य भ न य ज ज गाः गणा भवन्ति, द्वादशभिः सप्तभिश्च यतिर्भवति, सा मणिमञ्जरी नाम कीर्त्तिता पण्डितैरिति शेषः।

२०३। यत्र क्रमेण ज स ज स त भ ग गणाः भवन्ति, अष्टभिः चतुर्थैः सप्तभैश्च यतिः स्यात्, सा समुद्रतता नाम वृत्तिः स्यात्।

२०४। ज्ञेयेति।—यस्याः पादः मरभनयभगणैर्लगाभ्याञ्च घटितः सप्तमैः सप्तमैः षष्ठैश्चाक्षरैर्विच्छिन्ना सा सुवदना ना वृत्तं भवेत्।

---

२०-। যাহার প্রতিপাদে ক্রমে 'য' 'ম' 'ন' স' 'জ' 'জ' এবং একটী গুরু সন্নিবিষ্ট হয় এবং ষষ্ঠ সপ্তমাক্ষরে যতি থাকে, তাহা "মকরন্দিকা" ছন্দ।

২০২। যাহার প্রতিপাদে 'য' 'ভ' 'ন' 'য' 'জ' 'জ' গ' গণ থাকে, এবং দ্বাদশাক্ষরে সপ্তমাক্ষরে যতি থাকে, তাহা "মণিমঞ্জরী" ছন্দঃ।

২০৩। যাহার প্রতিপাদে ক্রমশঃ 'জ' 'স' 'জ' 'স' 'ত' 'ভ' ও 'গ' গণ সন্নিবিষ্ট হয় এবং অষ্টমাক্ষরে চতুর্থাক্ষরে পরে সপ্তমাক্ষরে যতি থাকে, তাহা "সমুদ্রততা" ছন্দঃ।

आनन्दाश्रुप्लुताक्षी वसति सुवदना योगैकरसिका
कामार्त्तिं त्यक्तुकामा ननु नरकरिपो राधा मम सखी ॥

स　ज　ज　भ　र　स　ल　ग

२०५ । सजजा भरौ सलगा यदा कथिता तदा खलु "गीतिका" ।

। । ऽ । ऽ । । ऽ । ऽ । । ऽ । ऽ । । ऽ । ऽ
करतालचञ्चलकङ्कणस्वनमिश्रणेन मनोरमा
रमणीयवेणुनिनादरङ्गिमसङ्गमेन सुखावहा ।

---

उदाहरणं—प्रत्येति ।—ननु सम्बोधने । नरकनामा दानवः तस्य रिपुः । अथवा भक्तानां निरयस्य निवारकत्वात् नरकरिपुः श्रीकृष्णः । हे नरकरिपो श्रीकृष्ण । मम सुवदना सखी राधा कामार्त्तिं कामपीड़ां त्यक्तुकामा निवारयितुमभिलषन्ती । 'तुमः काममनसो'रिति त्यक्तुमिति तुमो मकारस्य लोपः । योगैकरसिका जीवात्म-परमात्मनोरैक्यचिन्तनं चित्तवृत्तिनिरोधो वा योगः तव एकरसिका अत्यन्तासक्ता सती निकुञ्जे निवसति । निर्ज्जनस्थान एव योग उपयुज्यते, उपायान्तराभावात् योगादेव श्रीकृष्णसाक्षात्कारः सङ्कल्पितः । कथं योगमनुतिष्ठतीति दर्शयति—प्रत्याहृत्येति । त्वदितरविषयात् त्वदभिन्नविषयात् इन्द्रियाणि नयनचक्षुःप्रभृतीनि प्रत्याहृत्य निवार्य्य त्वय्येव स्थापयित्वा इत्यर्थः । नासाग्रे नयने यस्याः तथाभूता, परतरपुरुषं परमात्मानं त्वामेव ध्यायन्ती चिन्तयन्ती हर्षोत्थपुलका ध्यानेन त्वत्साक्षात्कारात् जातो यो हर्षः आनन्दः तस्मात् उत्थं उद्भूतं पुलकं रोमाञ्चो यस्याः तथाभूता, आनन्दाश्रुभिः आनन्दजनितवारिभिः प्लुते व्याप्ते अक्षिणी यस्याः तादृशी । सर्व्वं राधाया विशेषणम् ।

२०५ । सजेति ।—यस्याः पादः सजजभरसलगघटितः सा गीतिका नाम वृत्तं कथिता ।

---

( कृति—२० अक्षर )

२०४ । যাহার প্রতিপাদে ক্রমে 'ম' 'র' 'ভ' 'ন' 'য' 'ভ' 'ল' ও 'গ' গণ সন্নিবিষ্ট হয় এবং সাত সাত ও ছয় অক্ষরে যতি থাকে, তাহাকে "সুবদনা" ছন্দ বলিয়া জানিবে।

बहुलानुरागनिवासरासससुद्भवा भवरागिणं
विदधौ हरिं खलु वल्लवीजनचारुचामरगीतिका ॥

अथ शालतालतमालमालकन्दलपाटला दलकोमला'। (क)
इति कौशिककाव्ये ।

र न र न र न ग ल
२०६ । "वृत्त"मीदृशन्तु नामतो रजौ रजौ रजौ गुरुर्लघुश्च ।
S I S I S I S I S I S I S I S I S I S I

चित्रवृत्तलीलया निसर्गरम्यदेहरूपविभ्रमेण
राजमानसद्वयोविलाससम्पदा कलाकुतूहलेन ।
यः समं व्रजाङ्गनाजनैः सुराङ्गनानिभैः सुखं समेत्य
विष्णुरुल्ललास चित्तपद्मकोषषट्पदः स मे सदाऽस्तु ॥

---

करतालेति ।—करतालेन हस्ततालप्रदानेन चञ्चलकङ्कणस्य विचलितकरभूषण-विशेषस्य यः स्वनः ध्वनिः तस्य मिश्रणेन मनोरमा मनोज्ञा, रमणीयो यो वेणुनिनादः तस्य यो रङ्गः रागः तेन निष्पादित लयः तेन सङ्गमे सुखावहा सुखजनिका, वंशी-तानलयसमन्विता इत्यर्थः । बहुलानुरागस्य गाढ़ानुरागस्य निवासः चैतस्वरूपः यो रासः कामक्रीड़ा तत्र समुद्भवा •जाता. वल्लवीजनानां गोपीजनानां चारुचामरगीतिका रमणीयसमवेतसंगीतं हरिं भवरागिणं संसारासक्तं विदधौ चकार खलु । "चामरन्तु प्रकीर्णक"मित्यमरः ।

अथेति ।—अथ शालतालतमालानां कन्दलवत् नवाङ्कुरवत् पाटला दलवत् पुष्प-दलवच्च कोमला ।

२०६ । वृत्तमिति ।—नामतः नाम्ना ईदृशं एवम्प्रकारं वृत्तं वृत्तनामकमेव। वृत्तनामकस्य वृत्तस्य पादः रजरजरजगलघटितः स्यात् ।

उदाहरति—चित्रेति ।—यः विष्णुः चित्रवृत्तलीलया चित्रं अद्भुतं यत् वृत्तं

---

२०८ । যাহার প্রতিপাদ ক্রমে 'স' 'জ' 'জ' 'ভ' 'র' 'স' 'ল' 'গ' গণ দ্বারা সন্নিবদ্ধ হয়, তাহাকে "গীতিকা" ছন্দ কহে ।

य म न न ग र र ग
२०७। रसाश्वाश्वैः "शोभा" नयुगगजठरा मेघविस्फूर्ज्जिता चेत्
। ऽ ऽ ऽ ऽ ऽ ऽ। । ।।।। ऽ ऽ । ऽ ऽ । ऽ ऽ

सदा मूलोन्मीलत्सरसिजयुगला मध्यनम्रा फलाभ्यां
तयोरूर्द्धं राजत्तरलकिसलयाश्लिष्टसुस्निग्धशाखा।
लसन्मुक्तारक्तोत्पलकुवलयवच्चन्द्रविम्बाञ्चिताग्रा
महाशोभा मौलौ मिलदलिपटलैः कृष्ण सा कापि वल्ली॥

---

चरितं तस्य लीलया "पद्मे चरित्रे च" इत्यमरः। राजमानं दीप्यमानं यत् सद्वयः यौवनं तस्य विलाससम्पदा कलाकुतूहलेन नृत्यादिचतुःषष्टिकाजविद्यासु औत्सुक्येन, निसर्गेण स्वभावेन रम्यः सुन्दरः यो देहः तस्य रूपविभ्रमेण सौन्दर्य्यशोभया हेतुना। "रूपं स्वभावे सौन्दर्य्ये" इति कोषः। "शोभार्थेऽपि प्रयुज्यन्ते लक्ष्मीश्रीकान्तिविभ्रमाः" इति हलायुधः। सुराङ्गनानिभैः अप्सरःसदृशैः व्रजाङ्गनाजनैः समं सह सुखं समेत्य अनुभूय उल्लास क्रीड़ितवान्, सः विष्णुः मे मम चित्तमेव पद्मं तस्य कोषमध्ये सदा षट्पदो भ्रमरोऽस्तु। मम हृदये विष्णुः सदा विराजतामित्यर्थः।

२०७। रसेति।—चेत् यदि पूर्व्वोक्ता यमनसररगघटिता मेघविस्फूर्जिता, नयुगं गकारस्य जठरे मध्ये यस्याः तथाभूता स्यात्; तदा सैव शोभासंज्ञिका स्यात्। मेघविस्फूर्ज्जितायाः सगणस्थाने नगणस्तत्र एको गुरुर्यत्र प्रदीयते तर्हि शोभाच्छन्दो भवेदित्यर्थः। अत्र रसैः षड्भिः अश्वैः अश्वैः सप्तभिः सप्तभिश्चा-चरैर्यतिः कर्त्तव्या।

उदाहरति—सदेति।—हे कृष्ण! सदा मूले उन्मीलत् प्रफुल्लं सरसिजयुगलं पद्मद्वयं पादद्वयमित्यर्थः यस्याः सा। फलाभ्यां कुचाभ्यामित्यर्थः, मध्ये मध्यभागे नम्रा,

---

২০৬। যে ছন্দের প্রতিপাদে ক্রমশঃ 'র' 'জ' 'র' 'জ' 'র' 'জ' একটী গুরু ও একটী লঘু সন্নিবিষ্ট হয়, এইরূপ বৃত্ত 'বৃত্ত' নামে কথিত হয়।

२०८। ख्याता पूर्व्वैः "सुवंशा" यदि मरभना सद्वयं गो गुरुश्च।

२०९। सभरा न्मौ यलगास्त्रयोदशयति "मत्तेभविक्रीड़ितम्"।

इति वृत्तरत्नाकरपरिशिष्टे।

---

तयोः फलीयोरूर्द्ध्वं राजन्तौ शोभमाने तरले चपले च ये किसलये पल्लवे हस्तौ इत्यर्थः, ताभ्यां आश्लिष्टे समन्विते सुस्निग्धे शाखे भुजौ यस्याः सा। लसन्ति मुक्तारक्तोत्पलकुवलयानि दन्तोष्ठनेत्रमित्यर्थः विद्यन्ते अस्य तत् लसन्मुक्तारक्तोत्पलकुवलयवत् तथाभूतं यत् चन्द्रबिम्बं मुखमण्डलमित्यर्थः, तेन अञ्चिताया विराजितशिखरदेशा, मौलौ मस्तके मिलदलिपटलैः सङ्गतभ्रमरकुलैः कुन्तलैरित्यर्थः महती शोभा यस्याः सा महाशोभा। सा कापि अनिर्व्वचनीया वल्ली लता। श्रीकृष्णसमीपे कयाचित् व्रजाङ्गनया राधिकाया वर्णनमिदम्।

२०८। यदि क्रमेण मरभना गणाः, सगणद्वयं, गगणद्वयञ्च वर्त्तते, तदा सा पूर्व्वैः छन्दोज्ञैः सुवंशा इति ख्याता।

२०९। यत्र क्रमेण सभरा गणाः नगणमगणौ यलगाश्च गणा भवन्ति, त्रयोदशाक्षरेषु यतिः स्यात्, तद्वृत्तं मत्तेभविक्रीड़ितं नाम भवति।

---

২০৭। যাহার প্রতিপাদে পূর্ব্বোক্ত মেঘবিস্ফূর্জ্জিতাছন্দের অপরাংশে সাম্য থাকিয়া দুইটী 'ন' ও একটী 'গ' গণ দ্বারা বৈসাদৃশ্য ঘটে, এবং ছয় ও সাত সাত অক্ষরে যতি থাকে, তাহা "শোভা" নামক ছন্দঃ।

২০৮। যাহার প্রতিপাদে ক্রমশঃ 'ম' 'র' 'ভ' 'ন' দুইটী 'স' ও দুইটী গুরুবর্ণ সন্নিবিষ্ট হয়, তাহাকে প্রাচীন কবিগণ 'সুবংশা' বলিয়া থাকেন।

২০৯। যাহার প্রতিপাদে 'স' 'ভ' 'র' 'ন' 'ম' 'য' 'ল' ও 'গ' গণ সন্নিবিষ্ট হয় এবং ১৩অক্ষরে যতি থাকে, তাহা 'মত্তেভবিক্রীড়িত" ছন্দঃ।

प्रकृतिः । ( एकविंशत्यक्षरा वृत्तिः ) ।

म र भ न य य य

२१० । म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम् ।

ऽ ऽ ऽ ऽ । ऽ ऽ । । । । । । ऽ ऽ । ऽ ऽ । ऽ ऽ

व्याकोषेन्दीवराभा कनककषलसत्पीतवासाः सुहासा
बर्हैरुच्चन्द्रकान्तैर्वलयितचिकुरा चारुकर्णावतंसा ।
अंसव्यासक्तवंशीध्वनिसुखितजगद्वल्लवीभिर्लसन्ती
मूर्त्तिर्गोपस्य विष्णोरवतु जगति वः स्रग्धरा हारिहारा ॥

न ज भ ज ज ज र

२११ । नजभजजा जरौ यदि तदा गदिता "सरसी"कवीश्वरैः ।

---

२१० । म्रेति ।—मरभनययगघटितपादा स्रग्धरा नाम वृत्तं भवेत् । अत्र सप्तमैः सप्तमैः सप्तमैश्चाक्षरैर्यतिः कर्त्तव्या ।

व्याकोषेति ।—व्याकोषेन्दीवराभा प्रस्फुटितनीलपद्मसदृशी । "व्याकोषविकचस्फुटा" इत्यमरः । कनककषवत् कषितसुवर्णवत् लसत् उज्ज्वलं पीतं वासो वस्त्रं यस्याः सा । सुहासा मधुरहास्यान्विता । उच्चन्द्रैः उदितचन्द्रकैः कान्तानि रमणीयानि यानि बर्हाणि पिच्छानि तैः वलयिताः संयताः चिकुराः केशाः यस्याः सा, चारुकर्णावतंसा रमणीयकर्णभूषणा, अंसे स्कन्धदेशे व्यासक्ता संलग्ना या वंशी तस्या ध्वनिभिः सुखितं आनन्दयुक्तं कृतं जगत् यया सा, वल्लवीभिः गोपाङ्गनाभिः सह लसन्ती क्रीड़न्ती, स्रग्धरा धृतमालिका, हारी मनोरमः हारो यस्याः सा, गोपस्य गोपालस्य विष्णोर्मूर्त्तिः जगति वो युष्मान् अवतु रक्षतु ।

---

২১০। যাহার প্রতিপাদ যথাক্রমে 'ম' 'র' 'ভ' 'ন' ও তিনটী 'য' গণ দ্বারা রচিত এবং সাত সাত অক্ষরে যতি থাকে, তাহা "স্রগ্ধরা" নামে কথিত হয়।

। । ।। ऽ । ऽ ।।। ऽ ।। ऽ। । ऽ। ऽ। ऽ

चिकुरकलापशैवलकृतप्रमदासु लसद्रसोर्म्मिषु
स्फुटवदनाम्बुजासु विलसद्भुजबालमृणालवल्लिषु।
कुचयुगचक्रवाकमिथुनानुगतासु कलाकुतूहली
व्यरचयदच्युतो व्रजमृगीनयनासरसीसु विभ्रमम् ॥ (क)

तुरगशताकुलस्य परितः परमेकतुरङ्गजन्मनः
प्रमथितभूभृतः प्रतिपथं मथितस्य भृशं महीभृता।
परिचलतो बलानुजबलस्य पुरः सततं धृतश्रिय-
श्चिरगलितश्रियो जलनिधेश्च तदाऽभवदन्तरं महत् ॥ (ख)

इति माघे ३ ॥ ८२ ॥ सिंहकमिदमन्यत्र।

---

२११। नजेति।—नजभजजजरघटितपादा सरसी नाम वृत्तं कवीश्वरैः पण्डितश्रेष्ठैः गदिता।

चिकुरेति।—चिकुरकलापरूपैः शैवलैः कृतः प्रमदः आनन्दः अच्युतस्य इत्यर्थः, याभिः तासु। रसा अनुरागा एव रसा जलानि लसन्त्यः रसानां ऊर्म्मयः परम्परा यासु तासु। स्फुटानि विकसितानि वदनान्येव अम्बुजानि पद्मानि यासां तासु। विलसन्त्यः भुजा एव बालमृणालवल्लयः नूतनमृणाललता यासां तासु। कुचयुगान्येव चक्रवाकमिथुनानि चक्रवाकस्त्रीपुमांसः तैरनुगतासु युक्तासु। व्रजमृगीनयना व्रजाङ्गनाः ता एव सरस्यः सरोवराणि तासु कलाकुतूहली क्रीड़ोत्साही अच्युतः श्रीकृष्णः विभ्रमं विलासं व्यरचयत् अतनोत्।

उदाहरणान्तरमुपन्यस्यति—तुरगेति।—परितः समन्तात् तुरगशतैः अपरिमित-घोटकैः आकुलस्य व्याप्तस्य प्रतिपथं पथि पथि प्रमथिताः पराजिताः भूभृतः भूपाः पर्वताश्च येन, न तु स्वयं केनापि मथितस्येति भावः। सततं धृता श्रीः कान्तिः

---

२११। যাহার প্রতিপাদ ক্রমে 'ন' 'জ' 'ভ' 'জ' 'জ' 'জ' ও 'র' গণ দ্বারা গঠিত হয়, কবিগণকর্ত্তৃক তাহা "সরসী" নামে কথিত হয়।

आकृतिः । ( द्वाविंशत्यक्षरा वृत्तिः )

म　　म　ग　ग　न　न　न　न　ग　ग

२१२। मौ गौ नास्त्वत्वारो गो गो वसुभुवनयतिरिति भवति'हंसी'

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ । । । । । । । । । । । । ऽ ऽ

सार्द्धं कान्तेनैकान्तेऽसौ विकचकमलमधु सुरभि पिबन्ती

कामक्रीड़ाकूतस्फीतप्रमदरसरभसमलघु रसन्ती ।

कालिन्दीये पद्मारण्ये पवनपतनपरितरलपरागे

कंसाराते पश्य स्वच्छं सरभसगतिरिह विलसति हंसी ॥

---

कमला च येन तस्य हृतश्रियः पुरः राजधानीतः स्वयं वा परिचलतः बली बलरामः तदनुजस्य हरेः श्रीकृष्णस्य बलस्य सैन्यस्य परं केवलं एकस्यैव तुरगस्य उच्चैःश्रवस इत्यर्थः, जन्ममात्रं यस्य तस्य एकतुरङ्गजन्मनः सोऽपि जन्मानन्तरमेव इन्द्रेण नीत इति स्वाधीनो नासीति भावः । महीभृता मन्दराद्रिणा भूपतिना च भृशं अतिमात्रं मथितस्य, सततं विगतश्रियः हरिणा परिगृहीतत्वात् विगता श्रीर्लक्ष्मीर्यस्य तस्य । जलधेः समुद्रस्य च तदा प्रस्थानसमये महदन्तरं दूरगमनादि महत् तारतम्यञ्च अभवत् । मल्लिनाथः पद्मकावलीवृत्तमिदमुक्तवान्, तल्लक्षणं—नजभजजा जरौ नरपते कथिता भुवि पद्मकावलीति ।

२१२ । माविति ।—ममगगननननगगघटितपादा हंसी नाम वृत्तम्भवति । अत्र वसुभिरष्टभिर्भुवनैश्चतुर्द्दशभिश्चाक्षरैर्यतिः कर्त्तव्या ।

सार्द्धमिति । कान्तेन प्रियेण सार्द्धं सह एकान्ते निर्ज्जने कालिन्दीये यमुना-

---

আকৃতি ( দ্বাবিংশত্যক্ষরা বৃত্তি )

২১২। যাহার প্রতিপাদে ক্রমশঃ দুইটী 'ম' দুইটী 'গ' চারিটি 'ন' ও দুইটি 'গ' গণ সন্নিবিষ্ট হয় এবং অষ্টম ও চতুর্দ্দশ অক্ষরে যতি থাকে, তাহা "হংসী" ছন্দঃ ।

भ भ भ भ भ भ भ ग

२२३ । सप्तभकारयुतैकगुरुर्गदितेयमुदारतरा "मदिरा" ।

S I I S I I S I I S I I S I I S I I S I I S

माधवमासि विकस्वरकेशरपुष्पलसन्मदिरामुदितैः

भृङ्गकुलैरुपगीतवने वनमालिनमालि कलानिलयम् ।

कुञ्जगृहोदरपल्लवकल्पिततल्पमनल्पमनोजरसं

तं भज माधविकामृदुनर्त्तकयामुनवातकृतोपगमा ॥

---

समीपवर्त्तिनि पवनपतनेन पवनसञ्चारेण परितरलः विचलितः परागः रेणुर्यत्र तादृशं सौरभमये इत्यर्थः । पद्मारण्ये पद्मवने सुरभिसुगन्धिविकचकमलमधु प्रस्फुटितपद्ममधु पिबन्तौ कामक्रीडाकूतेन सुरताभिप्रायेण स्फीतः वृद्धिं गतः प्रमदरसस्य आनन्दरसस्य रभसः वेगो यत्र तद्यथा स्यात् तथा अलघु उच्चैः यथा रसन्ती कूजन्ती सरभसगतिः सानन्दगतिः असौ हंसी इह स्वेच्छं इच्छानुरूपं विलसति क्रीडति । हे कंसाराते ! श्रीकृष्ण ! पश्य । श्रीकृष्णं प्रति कस्याश्चित् गोपिकायाः स्वाभिप्रायव्यञ्जिका उक्तिरियम् ।

२१३। सप्तेति —गुर्व्वेकावसानैः सप्तभिर्भगणैर्घटिता उदारतरा अत्युत्कृष्टा मदिरा नाम वृत्तं कथ्यते ।

माधवेति ।—हे आलि ! सखि ! माधवमासि वैशाखे मासि विकस्वरकेशरपुष्पेषु प्रस्फुटितवकुलपुष्पेषु लसन्मदिराभिः स्फुरन्मधुभिः मुदितैः सन्तुष्टैः भृङ्गकुलैः भ्रमरसमूहैः उपगीते वने त्वं माधविका माधवीलता तस्याः मृदुनर्त्तकेन लघुकम्पकेन यामुनवातेन यमुनाकणवाहिवायुना कृत उपगमः आनुगत्यं यस्याः तथाभूता सती कुञ्जगृहोदरे पल्लवेन कल्पितं रचितं तल्पं शय्या यस्य तथाभूतं अनल्पमनोजरसं मनोजः कामः अनल्पः अधिकः मनोजरसः कामानुरागः यस्य तं कलानिलयं नृत्यादिचतुःषष्टिकामविद्याविशारदं तं वनमालिनं श्रीकृष्णं भज ।

---

२१७। যাহার প্রতিপাদ ক্রমশঃ সাতটি 'ভ' গণ ও একটী 'গ' গণ দ্বারা গঠিত, তাহা "মদিরা" ছন্দঃ ।

भ　र　न　र　न　र　न ग

२१४ । भ्री नरना रनावथ गुरुर्दिगर्कविरमं हि"भद्रक"मिदम् ।

इति वृत्तरत्नाकरे ।

म　स　र　स　त　ज　न ग

२१५ । 'लालित्य'भुजगेन्द्रेण भाषितमेतच्चेन्मसरस्तजनगुभिः ।

स　ज　त　न　स　र

२१६ । सजता नसौ रगौ गः फणितुरगहयैः स्यात् "महास्रग्ध-

र ग

रा"ख्या ।

इति वृत्तरत्नाकरपरिशिष्टे ।

---

२१४ । यस्य प्रतिपादं क्रमेण भगणरगणौ नरना रनौ एको गुरुश्च सन्निविष्टः स्यात्, दशमाक्षरैः द्वादशाक्षरैश्च यतिः स्यात्, तद्वृत्तं भद्रकं नाम भवति ।

२१५ । यस्य प्रतिपादं क्रमेण म स र स त ज ना गणा एको गुरुश्च स्यात्, तद्वृत्तं भुजगेन्द्रेण लालित्यं नाम भाषितम् ।

२१६ । यस्य प्रतिपादं क्रमेण सजता गणाः, नसौ रगौ च गणौ, एको गकारश्च सन्निवेश्यते, अष्टमैः सप्तमैः सप्तमैश्च यतिर्भवति तद्वृत्तं महास्रग्धरानाम स्यात् ।

---

২১৪। যাহার প্রতিপাদে ক্রমশঃ 'ভ' 'র' 'ন' 'র "ন" 'র' 'ন' গণ এবং একটী গুরুবর্ণ সন্নিবিষ্ট হয় এবং দশম ও দ্বাদশ অক্ষরে যতি থাকে, তাহা 'ভদ্রক' নামে কথিত হয়।

২১৫। যাহার প্রতিপাদে ক্রমশঃ 'ম' 'স' 'র' 'স' 'ত' 'জ' 'ন' ও একটী গুরুবর্ণ সন্নিবিষ্ট হয়, তাহাকে সর্পরাজ "লালিত্য" ছন্দ বলেন।

২১৬। যাহার প্রতিপাদ ক্রমশঃ 'স' 'জ' 'ত' 'ন' 'স' 'র' 'র 'গ' গণ দ্বারা গঠিত এবং অষ্টম সপ্তম সপ্তমাক্ষরে যতি থাকে, তাহাকে "মহাস্রগ্ধরা" ছন্দ বলে।

विकृतिः । ( त्रयोविंशत्यक्षरा वृत्तिः )

न ज भ ज भ ज भ ल ग

२१७ । नजभजभा जभौ लघुगुरू बुधैस्तु गदितेयमद्रितनया' ।

।।।।ऽ ।ऽ।।। ।ऽ।ऽ।। ।ऽ।ऽ।।।ऽ

खरतरशौर्य्यपावकशिखापतङ्गनिभमग्नदृप्तदनुजो
जलधिसुताविलासवसतिः सतां गतिरशेषमान्यमहिमा ।
भुवनहितावतारचतुरश्चराचरधरोऽवतीर्ण इह हि
क्षितिवलयेऽस्ति कंस शमनस्तवेति तमवोचदद्रितनया ॥ (क)
विलुलितपुष्परेणुकपिशं प्रशान्तकलिकापलाशकुसुमं
कुसुमनिपातविचित्रवसुधं सशब्दनिपतद्द्रुमोत्कशकुनम् ।
शकुननिनादनादितककुब्विलोलविपलायमानहरिणं
हरिणविलोचनाधिवसतिं बभञ्ज पवनात्मजो रिपुवनम् ॥

इति भट्टौ ॥ ८ । १३१ ॥ अश्वललितमिदमन्यत्र ।

---

२१७ । नजेति ।—नजभजभजभलगघटितपादा अद्रितनया नाम वृत्तं गदिता ।

खरेति । हे कंस ! खरतरं अतिप्रबलं यत् शौर्य्यं वीर्य्यं तदेव पावकः वह्निः तस्य शिखायां पतङ्गनिभं शलभतुल्यं यथा स्यात् तथा निमग्नाः पतिता दृप्ताः गर्व्विता दनुजा दानवा यस्य सः, जलधिसुता लक्ष्मीः तस्या यः विलासः सुरतादिकेलिः तस्य वसतिः आश्रयः, सतां साधूनां गतिः अवलम्बनं, नास्ति शेषः सीमा यस्य तादृशः, पूज्यः महिमा महत्त्वं यस्य सः, भुवनानां हिताय यः अवतारः आविर्भावः तत्र चतुरः निपुनः चराचरधरः कुक्षिस्थाखिललोकः श्रीकृष्णः तव शमनः यमस्वरूपः इह क्षिति-वलये पृथिव्यां हि निश्चितं अवतीर्णः आविर्भूतः अस्ति इति अद्रितनया योगमाया भगवती तं कंसमवोचत् उक्तवती । देवकीप्रसूतां बालिकां योगमायां यदा कंसो वधार्थं शिलायां निचिक्षेप तदा सा इत्थमुक्त्वा अन्तर्दधे एवम्पौराणिकी वार्त्ता अनुसन्धेया ।

विलुलितेति ।—पवनात्मजो हनूमान् विलुलितानि विमर्द्दितानि यानि पुष्पाणि

म म ग ग ल ल ल ल लल ल ल लल लल लल ग

२१८. 'मत्ताक्रीड़'' वस्विष्वाश्वायति मयुगगयुगमनुलघुगुरुभिः ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ । । । । । । । । । । । । । । ऽ

मुग्धोन्मीलन्मत्ताक्रीडं मधुसमयसुलभमधुरमधुरसाद्-

गाने याने किञ्चित् स्पन्दत् पदमरुणनयनयुगलसरसिजम् ।

रासोल्लासक्रीड़त्कृष्णव्रजयुवतिवलयरचितभुजरसं

सान्द्रानन्दं वृन्दारण्ये स्मरत हरिमनघचरणपरिचयम् ॥

---

तेषां रेणुभिः परागैः कपिशं पिङ्गलीभूतम् । प्रशान्तानि विनाशितानि कलिकाः पत्राणि पुष्पाणि च यत्र तत् । कुसुमानां निपातेन पतनेन विचित्रा वसुधा भूमिर्यत्र तत्, शब्देन सह सशब्दं तत् यथा स्यात् तथा निपतद्भ्यः द्रुमेभ्यः उत्क्षाः स्थानान्तरगमनाय उत्कण्ठिताः शकुनाः पक्षिणो यत्र तत् । शकुनानां वनं विहाय चलतामित्यर्थः, विलोलाः पक्षिणां निनादेन नादिता नादयुक्ताः कृताः ककुभः दिशः यत्र तत्, हरिणविलोचनायाः मृगाक्ष्याः चञ्चलाः सन्तः विपलायमानाः हरिणा मृगा यत्र तत्, जानक्या अधिवसतिं वासस्थानं रिपुवनं रिपोः रावणस्य उपवनं बभञ्ज ममर्द्द ।

२१८। मत्तेति ।—मयुगेन गयुगेन चतुर्द्दशैर्लघुभिः एकेन गुरुणा च निबद्धपादं मत्ताक्रीडं नाम वृत्तं भवेत् । अत्र वसुभिः अष्टभिः इषुभिः पञ्चभिः आशाभिर्द्दशभि-रक्षरैर्यतिः कर्त्तव्या ।

मुग्धेति ।—भक्तान् प्रति उक्तिरियम् । हे साधवः ! यूयं वृन्दारण्ये वृन्दावने, मुग्धं सुन्दरं यथा स्यात् तथा उन्मीलन्ती विकसन्ती मत्तस्येव आक्रीडा विलासो यस्य

---

বিকৃতি (ত্রয়োবিংশত্যক্ষরা বৃত্ত)।

২১৭। যাহার প্রতিপাদে ক্রমশঃ 'ন' 'জ' 'ভ' 'জ' 'ভ' 'জ' 'ভ' একটী লঘু ও একটী গুরু বর্ণ সন্নিবিষ্ট থাকে, তাহা পণ্ডিতগণকর্ত্তৃক "অদ্রিতনয়া" নামে কথিত হয়।

২১৯। ইহ"সুন্দরিকা"পিঙ্গলমুনিনোক্তা সদ্বয়তো ভসতাজ্-লভগাঃ।

সংস্কৃতিঃ (চতুর্বিংশত্যক্ষরা বৃত্তিঃ)।

ভ ত ন স ভ ভ ন

২২০। ভূতমুনীনৈর্যতিরিহ ভতনাৎসভৌ ভনযাশ্চ যদি ভবতি য "তন্বী"।

---

তম্, মধুসময়ে বসন্তকালে সুলভং যৎ মধুরং মধুরাস্বাদং মধু পুষ্পমধ্বিত্যর্থঃ, তস্য রসাৎ আস্বাদনাৎ গানে সঙ্গীতে যানে চ কিঞ্চিদ্ স্যন্দৎ কিঞ্চিৎ স্খলৎ পদং সুপ্তিঙন্তং চরণশ্চ যস্য তম্। স্যন্দদিত্যত্র পরস্মৈপদবিহিতশত্রন্ততা কবীনাং নিরঙ্কুশত্বাৎ সোঢ়ব্যা। অরুণং রক্তং নয়নযুগসরসিজং নেত্রকমলদ্বয়ং রাসে রাসক্রীড়াসময়ে উল্লাসেন আনন্দেন অথবা রাসোল্লাসেন রতিপ্রমোদেন ক্রীড়ন্তীনাং রুমাণাং কামমত্তানাং কান্তিমতীনাং বা ব্রজযুবতীনাং বলয়েষু মণ্ডলেষু রচিতঃ কৃতঃ ভুজরসো ভুজালিঙ্গনং যেন তম্। সান্দ্রঃ গাঢ়ঃ আনন্দঃ হর্ষঃ যস্য তং, নাস্তি অঘং পাপং যস্মাৎ তথাভূতঃ চরণপরিচয়ঃ পাদসেবা যস্য তম্, হরিং শ্রীকৃষ্ণং স্মরত ধ্যায়ত।

২১৯। ইহেতি।—যদি সগণদ্বয়ানন্তরং ভসতজলভগা নিবধ্যন্তে, তদা পিঙ্গলমুনিনা ইহ ছন্দঃশাস্ত্রে সুন্দরিকা নাম বৃত্তং উক্তা।

---

২১৮। যাহার প্রতিপাদে ক্রমশঃ দুইটী 'ম', দুইটী 'গ', চতুর্দ্দশটী লঘু ও একটী গুরুবর্ণ সন্নিবিষ্ট হয় এবং অষ্টম পঞ্চম ও দশমাক্ষরে যতি থাকে, তাহা 'মত্তাক্রীড়' নামে কথিত হয়।

২১৯। যাহার প্রতিপাদ দুইটী 'স' ও একএকটী 'ভ' 'স' 'ত' 'জ' 'ল' 'ভ' ও 'গ' গণ দ্বারা গঠিত হয়, উহাকে পিঙ্গলমুনি "সুন্দরিকা" ছন্দ বলেন।

S I I S S I I I I I I S S I I S I I I I I I S S

মাধব মুগ্ধৈর্মধুকরবিরুতৈঃ কোকিলকূজিতমলয়সমীরৈঃ
কম্পমুপেতা মলয়জসলিলৈঃ প্লাবনতোঽপ্যবিগততনুদাহা।
পদ্মপলাশৈর্বিরচিতশয়না দেহজসংজ্বরভরপরিদূনৈ-
র্নিঃশ্বসতী সা মুহুরতিপরুষং ধ্যানলয়ে তব নিবসতি তন্বী॥

২২১। নাম"কিরীট"মিদং ভগণা যদি পিঙ্গলনাগমুনীন্দ্রমতং
কিল।

---

২২০। ভূতেতি।—যদি ইহ ছন্দঃশাস্ত্রে ভতনসভভনযগণাঃ প্রতিপাদং নিবধ্যন্তে, তদা তন্বীনাম বৃত্তম্ভবতি, অত্র ভূতৈঃ পঞ্চমৈঃ মুনিভিঃ সপ্তমৈঃ ইনৈর্দ্বাদশৈ-শ্চাক্ষরৈর্যতিঃ কর্তব্যা।

মাধবেতি।—হে মাধব! কৃষ্ণ! মুগ্ধৈর্মনোরমৈঃ মধুকরবিরুতৈঃ ভ্রমরগুঞ্জিতৈঃ কোকিলানাং কূজিতানি ধ্বনয়শ্চ মলয়সমীরা মলয়বায়বশ্চ তৈঃ কম্পম্ উপেতা প্রাপ্তা, মলয়জসলিলৈঃ চন্দনরসৈঃ প্লাবনতোঽপি অত্যন্তসেচনাদিতঃ ন বিগতঃ তনুদাহঃ শরীর-জ্বালা যস্যাঃ তথাভূতা দেহজসংজ্বরভরেণ শারীরিকসন্তাপবাহুল্যেন পরিদূনৈঃ অতি-ক্ষীণৈঃ পদ্মপলাশৈঃ পদ্মপত্রৈঃ বিরচিতং নির্মিতং শয়নং শয্যা যস্যাঃ তথাভূতা তন্বী কৃশাঙ্গী সা রাধা অতিপরুষমতিরূক্ষং মুহুর্নিঃশ্বসতী শ্বাসং মুঞ্চন্তী "পরুষং কর্কশে রূক্ষে নিষ্ঠুরোক্তৌ চ বাচ্যব"দিতি মেদিনী। তব ধ্যানলয়ে চিন্তনরূপে যোগে নিবসতি : এবমবস্থামাপন্না সতী ত্বামেব সততং চিন্তয়তীত্যর্থঃ।

২২১। ভগণমাত্রৈর্ঘটিতং বৃত্তং কিরীটমিতি পিঙ্গলনাগমুনীন্দ্রস্য মতম্।

---

২২০। যাহার প্রতিপাদে ক্রমে 'ভ' 'ত' 'ন' 'স' 'ভ' 'ভ' 'ন' 'য' গণ সন্নিবিষ্ট হয় এবং পঞ্চাক্ষরে সপ্তাক্ষরে ও দ্বাদশাক্ষরে ক্রমে যতি থাকে, তাহা "তন্বী" নামক ছন্দঃ।

২২১। যাহার প্রতিপাদে 'ভ' গণ মাত্র সন্নিবিষ্ট হয়, পিঙ্গলনামক মুনীন্দ্র তাহাকে 'কিরীট' ছন্দঃ কহিয়াছেন।

२२२ । सगणैरिह वृत्तवरं वसुभिः किल "दुर्म्मिल" मुक्तमिदं कविभिः ।

अतिकृतिः । ( पञ्चविंशत्यक्षरा वृत्तिः )

भ म स भ ल ललल ल ल

२२३ । "क्रौञ्चपदा" स्याद् भो मसभाश्चे दिषुशरवसुमुनि-

ल ल ल ल ल ल ग

यतिरिनलघुगैः ।

ऽ।।ऽऽ ऽ।।ऽ ऽ।।।।।।।।।।।।।।ऽ

क्रौञ्चपदालीचित्रिततीरा मदकलखगकुलकलकलरुचिरा

फुल्लसरोजश्रेणिविलासा मधुमुदितमधुपरवरभसकरी ।

फेनविलासप्रोज्ज्वलहासा ललितलहरिभरपुलकितसुतनुः

पश्य हरेऽसौ कस्य न चेतो हरति तरलगतिरहिमकिरणजा ॥

क्वचिदत्र नवमाक्षरे लघुत्वम् ।

---

२२२ । अष्टाभिः सगणैर्घटितं वृत्तवरं कविभिः दुर्म्मिलं नाम वृत्तं उक्तम् ।

२२३ । क्रौञ्चेति ।—इनाः द्वादशाक्षराणि लघवः गश्च तैः । भमसभललललललललललललग घटितपादा क्रौञ्चपदा नाम स्यात् । अत्र इषुभिः पञ्चभिः वसुभिः अष्टभिः मुनिभिः सप्तभिश्च अक्षरैर्यतिः कर्त्तव्या ।

क्रौञ्चपदेति ।—क्रौञ्चानां वकविशेषाणां, "कुङ्क्रौञ्चोऽथ वकः कङ्कः" इत्यमरः । पदालीभिः पदपङ्क्तिभिः चित्रितं चिह्नितं तीरं यस्याः सा, मदकुलानि मदमत्तानि यानि खगकुलानि पक्षिसमूहाः तेषां कलकलैः कलकलरवैः रुचिरा मनोहरा, फुल्लसरोजानां विकसितपद्मानां श्रेणिभिः विलासः शोभा यस्याः सा, मधुमुदिताः मधुभिः

---

२२२ । যাহার প্রতিপাদ সগণে গঠিত, কবিগণ তাহাকে 'দুর্ম্মিল' ছন্দ বলেন।

उत्कृतिः। ( षड्विंशत्यक्षरा वृत्तिः )

म म त न न न र

२२४। वस्वीशाश्वैश्छेदोपेतं ममतननयुगरसलगैर्"भुजङ्ग-

स ल ग

विजृम्भितम्"।

ऽऽ ऽऽऽ ऽ ऽऽ।।।।।।।।।।ऽ।ऽ।।ऽ।ऽ

हेलोदञ्चच्चञ्चत्पादप्रकटविकटनटनभरो रणत्करतालक-

स्फारप्रेङ्खच्चूडाबर्हः श्रुतितरलनवकिसलयस्तरङ्गितहारधृक्।

तस्यन्नागस्त्रीभिर्भक्त्या मुकुलितकरकमलयुगं कृतस्तुतिरच्युतः

पायाद्वश्छिन्दन् कालिन्दीह्रदकृतनिजवसतिदृढद्भुजङ्गविजृम्भितम्॥

---

मत्ताः ये मधुपाः भ्रमराः तेषां रवेण रभसकरी हर्षोत्पादिनी "रभसो वेगहर्षयो"रिति मेदिनी। फेनानां विलासः शोभा एव प्रोज्ज्वलः उद्दीप्तः हासः यस्याः सा, ललित-लहरिभरेण रमणीयतरङ्गभरेण पुलकिता सुतनुर्यस्याः सा, तरलगतिः चञ्चलगतिः असौ अहिमः उष्णः किरणो यस्य अहिमकिरणः सूर्यः तस्मात् जायत इति अहिम-किरणजा यमुना कस्य चेतश्चित्तं न हरति आकर्षति। हे हरे! श्रीकृष्ण! पश्य। अलङ्कार-विभूषिता नृत्यन्ती रमणीव यमुनेयं सर्व्वेषामेव चित्तं समाकर्षतीति भावः। अलङ्कारः समासोक्तिः।

२२४। वस्वीशेति।—वस्वीशाश्वैः अष्टमैः एकादशैः सप्तमैश्चाक्षरैः छेदोपेतं यतियुक्तं ममतनननरसलगघटितपादं भुजङ्गविजृम्भितं नाम वृत्तं भवति।

उदाहरति—हेलेति।—हेलया लीलया उदञ्चन्ती उद्गच्छन्ती न्यञ्चन्ती अधःपतन्ती च पादौ चरणौ यस्मिन् तथाभूतः प्रकटः प्रव्यक्तः विकटः उद्धतश्च नटनभरो

---

২২৩। যাহার প্রতিপাদে 'ভ' 'ম' 'স' 'ভ' গণ এবং দ্বাদশটী লঘু ও একটী গুরুবর্ণ সন্নিবিষ্ট হয় এবং ৫ম এবং ৮ম ও তৎপর ১ম অক্ষরে যতি থাকে, তাহা 'ক্রৌঞ্চপদা' ছন্দঃ।

२२५। मो नाः षट् सगगिति यदि नवरसरसस्वरयतियुत-
"मपवाहा"ख्यम्।
इति वृत्तरत्नाकरे।

अथ दण्डकः॥ (क)

---

नर्त्तनातिशयो यस्य सः, रणन् शब्दायमानः करतालो यस्य सः दत्तहस्ततालः इत्यर्थः। चारु रमणीयं यथा स्यात् तथा प्रेङ्खत् विचलत् चूड़ावर्हं मौलिस्थितमयूरपुच्छं यस्य सः, श्रुत्योः कर्णयोः तरलं चञ्चलं नवं नूतनं किशलयं पल्लवं यस्य सः। तरङ्गः संजातोऽस्य तरङ्गितः तादृशः यस्यः हारः तं धरतीति तरङ्गितहारभृत् वस्तस्य भीताः याः नागस्त्रियः कालियसर्पपत्न्यः ताभिः भक्त्या मुकुलितं मुकुलवत् कृतं करकमलयुगं यस्मिन् तत् कृताञ्जलिपुटमित्यर्थः, तद्व यथा स्यात् तथा कृता स्तुतिः स्तवो यस्य सः अच्युतः श्रीकृष्णः कालिन्दीकूले कृता निजवसतिः स्वकीयं वेश्म येन। "वसती रात्रिवेश्मनो"रिति मेदिनी। तथा भूतो यो वृहद्भुजङ्गः कालियाख्यः महान् सर्पः तस्य विजृम्भितं आविर्भावं छिन्दन् विनाशयन् सन् वो युष्मान् पायात् अव्यात्।

२२५। यदि मकारेण षड्भिर्नकारैः सकारेण द्वाभ्यां गाभ्याञ्च घटितं नवभाक्षरैः षष्ठैः पञ्चमैश्च अक्षरैः यतियुतं तदा अपवाहनामकं वृत्तं भवति।

(क) षड्विंशत्यक्षरं यावत् उक्थादि पूर्व्वप्रतिज्ञातं वृत्तं प्रदर्श्य सम्प्रति सप्तविंशत्याद्यक्षरादृत्तदण्डकं वक्तुमारभते—अथेति।

---

२२४। যাহার প্রতিপাদ 'ম ম ত ন ন ন র স ল' ও 'গ' গণে গঠিত হয় এবং ৮।:১।৭অক্ষরে যতি থাকে, তাহা 'ভুজঙ্গবিজৃম্ভিত' নামে কথিত হয়।

২২৫। যাহার প্রতিপাদে ক্রমে একটী 'ম' ছয়টী 'ন' এবং একটী 'স' ও দুইটী 'গ' গণ সন্নিবিষ্ট হয়, এবং নয় ছয় পাঁচ অক্ষরে যতি থাকে, তাহা 'অপবাহ' ছন্দ হয়।

न न र र र र

२२६ । यदिह नयुगलं ततः सप्तरेफास्तदा "चण्डवृष्टि-

र र र

प्रपातो" भवेद्दण्डकः ।

। । । । । । ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ । ऽ । ऽ

प्रलयघनघटामहारम्भमेघावलीचण्डवृष्टिप्रपाताकुलं गोकुलम्
सपदि समवलोक्य सव्येन हस्तेन गोवर्द्धनं नाम शैलं दधल्लीलया ।
कमलनयन रक्ष रक्षेति जल्पन्नसन्मुग्धगोपाङ्गनालिङ्गनानन्दितः
गलदभिनवधातुधाराविचित्राङ्गरागो सुरारातिरस्तु प्रमोदाय वः ॥

---

२२६ । यदिहेति ।—हि पादपूरणे । "तुह्विचस्महवै पादपूरणे पूजायां स्वती"-त्यमरः । यदि आदौ नयुगलं ततः सप्तरेफा रगणाः स्युस्तदा चण्डवृष्टिप्रपातो नाम दण्डको भवेत् ।

प्रलयेति ।—गोकुलं प्रलयस्य प्रलयकालस्य यो घनानां मेघानां घटा समूहः तद्वत् महान् विपुलः आरम्भः आड़म्बरो यस्याः तादृशी या मेघावली तस्याः चण्डवृष्टि-प्रपातेन तुमुलवृष्टिधारया आकुलं समवलोक्य सपदि सद्यः लीलया अवहेलया सव्येन वामेन हस्तेन गोवर्द्धनं गोवर्द्धनाख्यं शैलं पर्व्वतं दधत् धारयन्, गलन्ती पतन्ती अभि-नवा नूतना या धातूनां मनःशीलादीनां धारा सा एव विचित्रः अङ्गरागो यस्य सः । हे कमलनयन ! रक्ष रक्ष इति जल्पन्तीनां गदन्तीनां वसन्तीनां उद्विग्नानां मुग्धा याः गोपाङ्गनाः तासां आलिङ्गनेन आनन्दितः सुरारातिः सुरहरः वो युष्माकं प्रमोदाय आनन्दाय अस्तु वर्त्तताम् ।

---

২২৬ । যাহার প্রতিপাদে প্রথমতঃ দুইটী 'ন' গণ পরে সাতটী 'র' গণ থাকে, তাহাকে 'চণ্ডবৃষ্টি-প্রপাত' নামক দণ্ডক কহে ।

२२७। प्रतिचरणविवृद्धरेफाः स्युरर्णोऽर्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः।

जय जय जगदीश विष्णो हरे राम दामोदर श्रीनिवासाच्युतानन्द नारायण।

त्रिदशगणगुरो मुरारे मुकुन्दासुरारे हृषीकेश पीताम्बर श्रीपते माधव॥

गरुड़गमन कृष्ण वैकुण्ठ गोविन्द विश्वम्भरोपेन्द्र चक्रायुधाधोक्षज श्रीनिधे।

वलिदमन नृसिंह शौरे भवाम्भोधिघोराणँसि त्वं निमज्जन्तमभ्युद्धरोपेत्य माम्॥

---

२२७। प्रतिचरणेति।—चरणे चरणे प्रतिचरणं प्रतिपादमित्यर्थः। विवृद्धो रेफो यत्र ते विवृद्धरेफाः अर्णोऽर्णवादयः स्युः। आदौ नयुगलं ततश्चेत् सप्तरेफाः स्युस्तदा चण्डवृष्टिप्रपातो नाम दण्डक इति पूर्व्वमुक्तं तत्रैव क्रमशो रेफवृद्धौ अर्णादयो नामानि क्रमशो भवेयुः। यथा—नयुगलात् सप्तसु रेफेषु चण्डवृष्टिप्रपातः, अष्टसु अर्णः, नवसु अर्णवः, दशसु व्यालः, एकादशसु जीमूतः, द्वादशसु लीलाकरः, त्रयोदशसु उद्दामः, चतुर्द्दशसु शङ्ख। आदिना आरामः संग्रामः सुरामः वैकुण्ठः सारः कासारः विसारः संहारः नीहारः मन्दरः केदारः आसारः सत्कारः संस्कारः मुकुन्दः गोविन्दः सानन्दः सन्दोहः आनन्दः इत्येवं पञ्चदशादिभिः रगणैः चण्डवृष्टिप्रपातादिनामका दण्डका भवन्ति।

जयेति।—हे जगदीश! विष्णो! त्वं जय जय सर्व्वोत्कर्षेण वर्त्तस्व वर्त्तस्व।—हे शौरे! त्वं उपेत्य समीपमागत्य भवसंसार एव अम्भोधिः समुद्रः तस्य घोरं भयानकं यत् अर्णः जलं तत्र निमज्जन्तं निमग्नं मां अभ्युद्धर उत्तोलय।

---

२२१। প্রতিপাদে চণ্ডবৃষ্টিপ্রপাত-দণ্ডকাপেক্ষা একটী 'র' গণ অধিক হইলে অর্ণোনামক 'দণ্ডক' হয়। এইরূপ ক্রমশঃ একটী করিয়া 'র' গণ অধিক হইয়া, অর্ণব, ব্যাস, জীমূত, লীলাকর, উদ্দাম, শঙ্খ প্রভৃতি ছন্দ হয়।

एवमर्णवादीनामप्युदाहरणानि बोध्यानि ।

२२८। "प्रचितक"-समभिधो धीरधीभिः स्मृतो दण्डको
नद्वयादुत्तरैः सप्तभिर्यैः ।

सुरहर यदुकुलाम्भोधिचन्द्र प्रभो देवकीगर्भरत्नत्रिलोकैकनाथ,
प्रचितकपटसुरारिव्रजोद्दामदन्तावलक्षोभविद्रावणे केशरीन्द्र ।
चरणनखरसुधांशुच्छटोन्मेषनिःशेषितध्यायिचेतोनिविष्टान्धकार,
प्रणतजनपरितापोग्रदावानलोच्छेदमेघ प्रसीद प्रसीद प्रसीद ॥

२२९। ' सगणः सकलः खलु यत्र भवेत्तमिह प्रवदन्ति बुधाः
"कुसुमस्तवकम् ।"

---

२२८। प्रचितेति ।—धीरा स्थिरा धीर्येषां तैः नद्वयात् नगणद्वयात् उत्तरैः परवर्त्तिभिः सप्तभिर्यगणैः प्रचितकं समभिधा नाम यस्य तथाभूतः दण्डकः स्मृतः कथितः । उदाहरणं— सुरहरेति ।—हे सुरहर ! यदुकुलमेव अम्भोधिः समुद्रः तस्य चन्द्रः तत् सम्बोधनम् । हे प्रभो ! हे देवकीगर्भरत्न ! हे त्रिलोकैकनाथ ! प्रचिता बहुलाः कपटा यस्य तथाभूतो यः सुरारिव्रजः दानवसमूहः स एव उद्दाम दन्तावलक्षोभः मत्तहस्तिसंघः तस्य विद्रावणे विनाशे केशरीन्द्र ! चरणनखररूपा ये सुधांशवः चन्द्राः तेषां छटया दीप्त्या उन्मेषेण निःशेषितः विनाशितः ध्यायिनां स्वचरणचिन्तापरायणानां भक्तानां चेतोनिविष्टः चित्तस्थितः अन्धकारो येन तत्सम्बोधनम् । प्रणतजनानां यः परितापः स एव उग्रः प्रचण्डः दावानलः तस्य उच्छेदे निर्व्वापने मेघस्वरूप । प्रसीद अस्मान् प्रतीति शेषः ।

---

२२৮। যাহার প্রতিপাদে ক্রমে দুইটী 'ন' গণ, সাতটী 'য' গণ সন্নিবিষ্ট হয়, পণ্ডিতগণ তাহাকে 'প্রচিতক' নামক দণ্ডক বলেন।

विरराज यदीयकरः कनकद्युतिवन्धुरवामदृशः कुचकुट्मलगः,
भ्रमरप्रकरेण यथावृतमूर्त्तिरशोकलताविलसत्कुसुमस्तवकः।
सनवीनतमालदलप्रतिमच्छवि विभ्रदतीव विलोचनहारि वपुः,
चपलारुचिरां शुकवल्लिधरो हरिरस्तु मदीयहृदम्बुजमध्यगतः॥

२३०। यत्र रेफः परं स्वेच्छया गुम्फितः स स्मृतो दण्डको "मत्तमातङ्गलीलाकरः।"

हेमगौरं वसानोऽंशुकं शक्रनीलासिते वर्ष्मणि स्पष्टदिव्यानुलेपाङ्किते,
तारहारांशुवन्दीनभश्चिलमालाञ्चितो भव्यभूषोज्ज्वलाङ्गः समं सीरिणा।

---

२२९। सगण इति।—यस्य सप्तविंशत्यक्षरघटितपादे केवलः सगणो वर्त्तते तं कुसुमस्तवकं नाम दण्डकं बुधाः प्रवदन्ति इत्यर्थः।

विरराजेति।—यदीयकरः यस्य हस्तः कनकद्युतिवत् स्वर्णकान्तिवत् वन्धुरा मनोज्ञा या वामदृक् रमणी गोपरमणीत्यर्थः, तस्याः कुचकुट्मलगः कोरकवत्कुचमण्डलस्थः सन् भ्रमरप्रकरेण मधुकरसमूहेन आवृता वेष्टिता मूर्त्तिर्यस्य तथा भूतः अशोकलतायाः विलसन् शोभमानः यः कुसुमस्तवकः स इव विरराज शुशुभे। नवीनं नूतनं यत् तमालदलं तत्प्रतिमच्छवि तत्तुल्यकान्ति अतीव सातिशयं विलोचनहारि नेत्रप्रीतिकरं वपुर्विभ्रत् दधत्, चपलावत् विद्युदिव रुचिरा मनोज्ञा या अंशुकवल्लिः उत्तरीयवसनलता तां धरतीति तथोक्तः सः हरिः मदीयं हृत् हृदयमेव अम्बुजं तस्य मध्यगतः अस्तु।

२३०। यत्रेति।—यत्र दण्डके प्रतिपादं स्वेच्छया परं केवलं रेफो गुम्फितः निबद्धः स्यात् स मत्तमातङ्गलीलाकरो नाम दण्डको भवेत्।

हेमेति।—शक्रनीलासिते इन्द्रनीलमणिवत् असिते श्यामवर्णे स्पष्टः समुज्ज्वलः दिव्यः मनोहरः यः अनुलेपः कस्तूरिकाद्यनुलेपनद्रव्यं तेन अङ्किते लिप्ते वर्ष्मणि

---

२२९। যাহার সমস্ত পাদগুলি কেবল 'স' গণেই গঠিত হয়, তাহাকে পণ্ডিতগণ 'কুসুমস্তবক' ছন্দঃ বলিয়া থাকেন।

अञ्जनाभाम्बरेणेन्दुकुन्दाभदेहेन लीलापरीहासहासोर्म्मिकौतूहलैः
कंसरङ्गाद्रिगः पातु वश्चक्रपाणिर्गतिक्रीड़या मत्तमातङ्गलीलाकरः ॥

२३१ । लघुगुरुनिजेच्छया यदा निवेश्यते तदेष दण्डको
भव-"त्यनङ्गशेखरः ।"

उदेत्यसौ सुधाकरः पुरो विलोकयाद्य राधिके विजृम्भमाणगौरदीधितिः
रतिस्वहस्तनिर्म्मितः कलाकुतूहलेन चारुचम्पकैरनङ्गशेखरः किमु ।
इति प्रमोदकारिणीं प्रियाप्रसादलक्षणां गिरं समुद्गिरन् सुरारिरद्भुताम्,
प्रदोषकालसङ्गमोल्लसन्मना मनोजकेलिकौतुकी करोतु वः कृतार्थताम् ॥

---

शरीरे हेमगौरं काञ्चनवत् पीतवर्णं अंशुकं वस्त्रं वसानः परिदधत् तारहारस्य मुक्ताहारस्य अंशुर्यत्र तथा भूतं वक्षः वक्षःस्थलं एव नभः आकाशं तस्मिन् चित्र-मालाञ्चितः चित्रा विचित्रा या माला तया अञ्चितः समलङ्कृतः । भव्या रम्या वा भूषा तया उज्ज्वलं अङ्गं यस्य सः । अञ्जनाभाम्बरेण नीलाम्बरेण इन्दुश्चन्द्रः कुन्दः कुन्दपुष्पं तदाभः तत्तुल्यवर्णविशिष्टो देहो यस्य तथाभूतेन सीरिणा बलरामेण समं सह लीलापरिहासानां ऊर्म्मिभिः परम्पराभिः कौतूहलैश्च उपलक्षितः । कंसस्य यः रङ्गः रणभूमिः स एव अद्रिः पर्व्वतः तत्र गच्छतीति तथोक्तः गतिक्रीड़या गतिलीलया मत्तमातङ्गलीलाकरः मत्तो यो मातङ्गो हस्ती तस्य लीलां विलासं करोतीति तथोक्तः, चक्रं पाणौ यस्य सः श्रीकृष्णः वो युष्मान् पातु रक्षतु ।

२३१ । लघुरिति ।—यदा निजेच्छया आदौ लघुस्ततो गुरुर्वर्णः क्रमेण निर्द्दिश्यते तदा अनङ्गशेखरो नाम दण्डको भवेत् ।

उदेत्यसाविति ।—हे राधिके ! अद्य इदानीं पुरः पूर्व्वस्यां दिशि सम्मुखभागे च विजृम्भमाणाः समुल्लसन्त्यः गौरदीधितयो यस्य तथाभूतः असौ सुधाकरः चन्द्रः

---

২৩০ । যাহার প্রতিপাদ কেবল 'র' গণে গঠিত হয়, তাহাকে 'মত্তমাতঙ্গলীলাকর' দণ্ডক কহে ।

२३२। यत्र दृश्यते गुरोः परो लघुः क्रमात् स उच्यते बुधै-
"रशोकपुष्पमञ्जरी"ति।

मूर्ध्नि चारुचम्पकस्रजा सलीलवेष्टनं लसल्लवङ्गचारुचन्द्रिका कचेषु,
कर्णयोरशोकपुष्पमञ्जरीवतंसको गले च कान्तकेशरोपक्लृप्तदाम।
फुल्लनागकेशरादिपुष्परेणुरूषणां तनौ विचित्रमित्युपात्तवेश एष,
केशवः पुनातु वः स्वपुष्पभूषितः स मूर्त्तिमानिवागतो मधुर्व्विहर्त्तुमत्र॥

एते दण्डकाः।

---

उदेति, इति विलोकय पश्य। असौ कलाकुतूहलेन शिल्पकौतुकेन हेतुना, चारुचम्पकैः रत्या कामस्त्रिया स्वहस्तेन निर्म्मितः अनङ्गशेखरः अनङ्गस्य कामदेवस्य शेखरः शिरोभूषणं किं इति प्रमोदकारिणीं आनन्ददायिनीं प्रियाप्रसादलक्षणां प्रियायाः राधिकायाः प्रसन्नताविधायिनीं अद्भुतां गिरं समुद्गिरन् ब्रुवन् मनोजः कामः तस्य केलिकौतुकी क्रीड़ासमुत्सुकः प्रदोषकाले यः सङ्गमः तस्मिन् उल्लसत् आसक्तं मनो यस्य तथाभूतः मुरारिः श्रीकृष्णः वः युष्माकं कृतार्थतां अभीष्टपूरणं करोतु।

२३२। यत्रेति।—यत्र क्रमात् गुरोः परो लघुर्वर्णो दृश्यते स बुधैः अशोकपुष्पमञ्जरीनाम दण्डकः कथ्यते।

मूर्द्ध्नीति।—मूर्द्ध्नि मस्तके चारुः रमणीया या चम्पकस्रक् चम्पकपुष्पमाला तया सलीलवेष्टनं मनोरमबन्धनम्। कचेषु कुन्तलेषु लसन्ति शोभमानानि लवङ्गानि कुसुमानि चारुचन्द्रिका रमणीयमल्लिका पुष्पञ्च। कर्णयोः अशोकपुष्पमञ्जरीवतंसकः अशोकपुष्पमञ्जरीकृतभूषणं गले कान्तं मनोहरं केशरोपक्लृप्तं बकुलपुष्परचितं दाम माल्यं तनौ कलेवरे विचित्रं फुल्लानां प्रस्फुटितानां नागकेशरादिपुष्पाणां रेणुभिः

---

२७১। স্বেচ্ছায় যে ছন্দে একটী লঘু ও একটী গুরু এই ক্রমে অক্ষর সন্নিবেশ করা হইবে, তাহার নাম "অনঙ্গশেখর"।

२३३ । यकारैः कवीच्छानुरोधान्निबद्धैः प्रसिद्धो विशुद्धोऽपर-
दण्डकः "सिंहविक्रीड़" नामा ।

२३४ । स्वेच्छया रजौ क्रमेण संनिवेशयत्युदारधीः कविः स
दण्डकः स्मृतो जयत्य "शोकमञ्जरी ।"

२३५ । यत्र रेफान् कविः स्वेच्छया पाठसौकर्य्यसापेक्षया
रोपयत्येष धीरैः स्मृतो दण्डको "मत्तमातङ्गलीलाकरः ।"

---

लक्षणं रञ्जनं इति एवम्प्रकारेण उपात्तौ विरचितौ वेशौ येन तथाभूतः स्वपुष्पभूषितः स्वकीयैः पुष्पैरलङ्कृतः अत्र कानने विहर्त्तुं आगतः स मूर्त्तिमान् शरीरी वसन्त इव वसन्ताख्य ऋतुरिव स्थितः केशवः वो युष्मान् पुनातु ।

२३३ । यकारेति । कवीच्छानुरोधात् कवेरभिप्रायानुसारेण निबद्धैर्यथितैः यकारैर्यगणैः सिंहविक्रीड़नामा विशुद्धः अपरः प्रसिद्धो दण्डको भवेत् ।

२३४ । स्वेच्छयेति ।—उदाराधीर्यस्य तथाभूतः कविः यदि स्वेच्छया क्रमेण रजौ गणौ संनिवेशयति तदा स दण्डकः अशोकमञ्जरी नाम स्मृतः ।

२३५ । यत्र कविः पाठसौकर्य्यसापेक्षया स्वेच्छया रेफान् रगणान् रोपयति निवेशयति स दण्डकः धीरैः बुधैः मत्तमातङ्गलीलाकरः स्मृतः ।

---

২৩২। যে ছন্দে প্রতিপাদে প্রথমতঃ একটী গুরু পরে একটি লঘু এইরূপে অক্ষর সন্নিবেশ করা হয়, তাহা পণ্ডিতগণ কর্তৃক 'অশোকপুষ্প-মঞ্জরী' নামে কথিত হইয়া থাকে।

২৩৩। কবির স্বেচ্ছাক্রমে কেবল যকারদ্বারা প্রতিপাদ রচিত হইলে 'সিংহ-বিক্রীড়' নামক দণ্ডক হইয়া থাকে।

২৩৪। যে ছন্দে প্রতিপাদে প্রথম 'র' পরে 'জ' এই ভাবে পরস্পর 'র-জ' গণ পণ্ডিতগণকর্তৃক সন্নিবেশিত হয়, তাহা "অশোকমঞ্জরী" দণ্ডক নামে খ্যাত।

२२६। नयुगलगुरुयुगैवं यकाराः कवीच्छानुरोधात्, तदा यत्र बध्यन्ते एषोऽपरो दण्डकः पण्डितैरीरितः 'सिंहविक्रान्त'नामा।

इति वृत्तरत्नाकरपरिशिष्टे।

इति छन्दोमञ्जर्य्यां समवृत्ताख्यो द्वितीयः स्तवकः।

---

# तृतीयः स्तवकः।

## अथार्द्धसमवृत्तम्।

स स स लग भ भ भ

२३७। विषमे यदि सौ सलगा दले, भौ युजि भाद्गुरुकाः-

ग ग

"वुपचित्रम्।"

द्विरावृत्त्या श्लोकः पूरयितव्यः।

---

२२६। आदौ नगणद्वयं ततो गुरुद्वयं ततश्चेत् यगणा वध्यन्ते निबध्यन्ते तदा सिंहविक्रान्तनामा अपरो दण्डकः पण्डितैरीरितः।

---

२३५। যে ছন্দে কবি স্বেচ্ছায় পাঠসৌকর্য্যার্থে কেবল 'র' গণ সন্নিবিষ্ট করেন, তাহা পণ্ডিতগণকর্ত্তৃক 'মত্তমাতঙ্গলীলাকর' দণ্ডকনামে কথিত হয়।

২৩৬। যাহার প্রতিপাদে কবিদের ইচ্ছাক্রমে প্রথমতঃ দুইটী 'ন' একটী 'ল' দুইটী 'গ' এবং পরে 'য' গণ মাত্র সন্নিবিষ্ট হয়, তাহা 'সিংহ-বিক্রান্তনামক' অপর দণ্ডক বলিয়া জানিবে।

( সমবৃত্ত প্রকরণ সমাপ্ত )।

। । ऽ । । ऽ । । ऽ । ऽ ऽ । । ऽ । । ऽ । । ऽ ऽ

सुरवैरिवपुस्तनुतां मुदं हेमनिभांशुकचन्दनलिप्तम् ।

गगनं चपलामिलितं यथा शारदनीरधरैरुपचित्रम् ॥

स　स　स　ल　ग　भ　भ　भ　ग　ग

२३८ । विषमे प्रथमाक्षरहीनं दोधकमेव हि "वेगवती" स्यात् ।

। । ऽ । । ऽ । । ऽ ऽ ऽ । । ऽ । । ऽ । । ऽ ऽ

स्मरवेगवती व्रजरामा केशववंशरवैरतिमुग्धा ।

रभसान्न गुरून् गणयन्ती केलिनिकुञ्जगृहाय जगाम ॥

---

२३७ । विषमे इति ।—विषमे प्रथमे तृतीये च द्वे पादे यदि सौ सलगाः सगण-त्रयं लकारो गकारश्च वर्त्तते युजि युग्मे द्वितीये चतुर्थे च इत्यर्थः द्वे भगणत्रयं गुरुद्वयञ्च वर्त्तते तदा उपचित्रं नाम अर्द्धसमं वृत्तं भवति ।

उदाहरणं—सुरवैरीति ।—हेमनिभं काञ्चनसदृशं पीतमित्यर्थः, अंशुकं वस्त्रं यत्र तथाभूतं चन्देनेन अनुलिप्तं चन्दनानुलिप्तं तत् उभयोर्विशेषणयोः पूर्व्वस्य विशिष्यत्व-विवक्षया कर्म्मधारयसमासः । सुरवैरिवपुः श्रीकृष्णस्य मूर्त्तिः चपलया विद्युता मिलितं युक्तं शारदनीरधरैः शरत्कालीयमेघैरुपचित्रं चित्रितं गगनं आकाशमण्डलं यथा इव मुदं आनन्दं तनुतां विस्तारयतु ।

२३८ । विषम इति ।—पूर्व्वं एकादशाक्षरवृत्तप्रसङ्गे "दोधकमिच्छति भत्रितयाद्गौ" इति दोधकलक्षणमुक्तम्, तत् दोधकमेव विषमे प्रथमे तृतीये च पादे प्रथमाक्षर-हीनं सत् वेगवती नाम वृत्तं स्यात् ।

---

অর্দ্ধ সমবৃত্ত ।

২৩৭ । যে ছন্দের প্রথম ও তৃতীয় পাদে ক্রমশঃ তিনটী সগণ একটী 'ল' ও 'গ' গণ সন্নিবিষ্ট হয় এবং দ্বিতীয় ও চতুর্থপাদে তিনটী 'ভ' গণ ও দুইটী গুরুবর্ণ সন্নিবিষ্ট হয়, তাহা 'উপচিত্র' ছন্দঃ ।

स स सलग न भ
२३८। अयुजि प्रथमेन विवर्जितं द्रुतविलम्बितकं
भ र
"हरिणप्लुता।"

। । ऽ । । ऽ । । ऽ । ऽ । । । ऽ । । ऽ । । ऽ । ऽ

स्फुटफेनचया हरिणप्लुता बलिमनोज्ञतटा तरणेः सुता।
कलहंसकुलारवशालिनी विहरतो हरति स्म हरेर्मनः॥

---

उदाहरणं—स्मरेति।—स्मरवेगवती काममत्ता व्रजरामा व्रजाङ्गना केशवंशरैः श्रीकृष्णस्य वंशीध्वनिभिः अतिमुग्धा अत्यर्थं मोहं प्राप्ता अतएव गुरून् श्वशुरादिगुरुजनान् न गणयन्ती तेभ्यो लज्जादिकमकुर्व्वती सती रभसात चित्तवेगात् हर्षात् वा केलिनिकुञ्जगृहाय क्रीड़ार्थकलतामण्डपाय जगाम।

२३८। अयुजीति।—पूर्व्वं द्वादशाक्षरवृत्तप्रसङ्गे "द्रुतविलम्बितमाह नभौ भरौ" इति द्रुतविलम्बितलक्षणमुक्तम्। तदेव द्रुतविलम्बितं अयुजि विषमे पादे प्रथमाक्षरेण विवर्जितं सत् हरिणप्लुता नाम वृत्तं भवेत्।

उदाहरति—स्फुटेति।—स्फुटः शोभमानः फेनचयः फेनसमूहः यस्याः सा हरिणानां मृगानां प्लुतं लम्फनेन गमनं यत्र तथा भूता, बलिभिः पूजोपकरणपुष्पदूर्व्वादिभिः मनोज्ञं तटं यस्याः सा कलहंसकुलारवशालिनी तरणेः सुता यमुना, विहरतः विचरतः हरेः श्रीकृष्णस्य मनः हरति स्म आचकर्ष।

---

২৩৮। প্রথম ও তৃতীয় পাদে যদি দোধক ছন্দের প্রথমাক্ষরশূন্য হয় এবং দ্বিতীয় ও চতুর্থপাদে দোধক ছন্দের লক্ষণ সঙ্গত হয়, তবে তাহা 'বেগবতী' ছন্দঃ।

২৩৯। যদি বিষমপাদে দ্রুতবিলম্বিতলক্ষণের প্রথম অক্ষর শূন্য হয় ও সমপাদে উক্তছন্দের লক্ষণ থাকে, তবে তাহা 'হরিণপ্লুতা' ছন্দ হয়।

न　न　र ल ग　न　ज　ज　र

२४० । अयुजि ननरला गुरुः समे 'तदपरवक्त्र'मिदं नजौ जरौ ।

। । ।।।। ऽ।ऽ।ऽ ।।। ।ऽ।। ऽ ।ऽ।ऽ

स्फुटसुमधुरवेणुगीतिभिस्तमपरवक्त्रमवेत्य माधवम् ।

मृगयुवतिगणैः समं स्थिता व्रजवनिता धृतचित्तविभ्रमाः ॥

(क) वैतालीयं पुष्पिताग्राश्चेच्छन्त्यपरवक्त्रकम् ।

न　न　र　य　न

२४१ । अयुजि नयुगरेफतो यकारो युजि च नजौ

ज　ज　र ग

जरगाश्च "पुष्पिताग्रा ।"

---

२४० । अयुजिनेति ।—अयुजि विषमे पादे ननरलगा गुरुश्च, समे द्वितीये पादे नजौ जरौ च गणौ यदि तदा तदिदं वृत्तं अपरवक्त्रं नाम ।

स्फुटेति ।—व्रजवनिता व्रजस्त्रियः तं माधवं श्रीकृष्णं स्फुटाः प्रव्यक्ताः सुमधुराश्च याः वेणुगीतयः वंशीध्वनयः ताभिः अपरं असाधारणं वक्त्रं मुखं यस्य तथाभूतं प्रसिद्ध-वंशीवादकमित्यर्थः, अवेत्य ज्ञात्वा मृगयुवतिगणैः हरिणीभिः समं सह धृतः चित्तविभ्रमो याभिस्ताः विभ्रान्तचित्ताः सत्यः स्थिताः श्रीकृष्णस्य वंशीगीतिश्रवणेन व्रजस्त्रियः हरिणी-गणाश्च तुल्यं मुग्धा अभूवन् इत्यर्थः ।

(क) वैतालीयं पुष्पिताग्राञ्च नाम वक्ष्यमाणं वृत्तं अपरवक्त्रकमिच्छन्ति, अनयो-रपरवक्त्रमेव संज्ञेति इच्छन्ति न तु पृथक्त्वमिति ।

---

२४० । যাহার বিষমপাদে 'ন' 'ন' 'র' 'ল' ও একটী গুরুবর্ণ থাকে, ও সমপাদে 'ন' 'জ' 'জ' 'র' গণ থাকে, তাহা "অপরবক্ত্র" ছন্দঃ ।

I I I I I I S I S I S S I I I I S I I S I S I S S
करकिसलयशोभया विभान्ती कुचफलभारविनम्रदेहयष्टिः।
स्मितरुचिरविलासपुष्पिताग्रा व्रजयुवतिव्रततिर्हरेर्मुदेऽभूत्॥

स स ज ग स भ र ल ग
२४२। अयुजोर्यदि सौ जगौ युजोः सभरा ल्गौ यदि "सुन्दरी" तदा।

I I S I I S I S I S I I S S I S I S I S
यदवोचदुदीक्ष्य सुन्दरी परितः स्नेहमयेन चक्षुषा।
अपि कंसहरस्य दुर्वचं वचनं तद्विदधीत विस्मयम्॥ (क)
यदवोचत वीक्ष्य मानिनी परितः स्नेहमयेन चक्षुषा।
अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम्॥ (ख)

इति भारवी॥२॥२॥

---

२४१। अयुजीति।—अयुजि विषमे पादे नगणद्वयरगणेभ्यः परं यगणः स्यात् युजि समे च पादे नजौ जगणौ च यदि स्युस्तदा पुष्पिताग्रा नाम वृत्तं स्यात्।

करेति। करकिशलयशोभया हस्तरूपपल्लवशोभया विभान्ती शोभमाना, कुचाविव फले तयोर्भारेण विनम्रा लता देही यष्टिरिव यस्याः सा, स्मितस्य मन्दहासस्य यो रुचिरो मनोज्ञो विलासः प्रकाशः स एव पुष्पं पुष्पप्रकाशः तत् सञ्जातमस्य तत् स्मितरुचिरविलासपुष्पितं तथाभूतं अग्रं वदनं यस्याः सा व्रजयुवतिः व्रततिः व्रजाङ्गनारूपा लता हरेर्मुदे आनन्दाय अभूत्।

२४२। अयुजोरिति।—अयुजोः विषमयोः पादयोः यदि सौ जगौ, युजोः समयोः पादयोः यदि सभरात् परौ लगौ, तदा सुन्दरी नाम वृत्तं स्यात्।

---

২৪১। বিষম পাদে দুইটী 'ন' একটী 'র' ও 'য' গণ সন্নিবিষ্ট হইলে এবং সমপাদে 'ন' 'জ' 'জ' 'র' ও 'গ' গণ সন্নিবিষ্ট হইলে "পুষ্পিতাগ্রা" ছন্দ হয়।

२४३। भतयमौजगतं गुरुणो चेद् युजि च नजौ ज्यगुतौ "द्रुतमध्या"।

२४४। ओजे तपरौ जरौ गुरुश्चेन् म्सौ ज्गौ ग् "भद्रविराड्" भवेदनोजे।

२४५। असमे सजौ सगुरुयुक्तौ "केतुमती" समे भरनगाद् गः॥

---

यद्वोचदिति। सुन्दरी काचिद् गोपाङ्गना परितः समन्तात् स्नेहमयेन चक्षुषा उदीक्ष्य यद्वचनं अवोचत् दुर्व्वचं अन्यया स्त्रिया वक्तुमशक्यं तद्वचनं कोमलस्य श्रीलक्ष्मणस्य अपि विस्मयं विदधीत जनयेत्।

यद्वोचतेति।—मानिनी क्षत्रियकुलगौरवाभिमानशालिनी द्रौपदी स्नेहमयेन स्नेहबहुलेन चक्षुषा विज्ञाननेत्रेण परितः समन्तात् वीक्ष्य विचार्य्य यत् वचनं अवोचत उक्तवती, वागधिपस्य बृहस्पतेरपि दुर्व्वचं वक्तुमशक्यं तद् वचनं विस्मयं विदधीत। अथवा अन्यैर्दुर्व्वचं तद् वचः वागधिपस्यापि अन्यस्य का कथा विस्मयं विदधीत।

---

২৪২। যদি বিষমপাদদ্বয়ে দুইটী 'স' 'জ' গ ও সমপাদদ্বয়ে 'স' 'ভ' 'র' 'ল' ও 'গ' গণ সন্নিবিষ্ট হয়, তবে "সুন্দরী" ছন্দ হয়।

২৪৩। যদি ওজে অর্থাৎ বিষম পাদে তিনটী 'ভ' এবং দুইটী গুরুবর্ণ সন্নিবিষ্ট হয় এবং সমপাদে 'ন' 'জ' 'জ' ও 'য' গণ থাকে, তবে তাহা 'দ্রুতমধ্যা' ছন্দ হয়।

২৪৪। বিষমপাদে 'ত' 'জ' 'র' ও গুরুবর্ণ এবং অর্থাৎ সমপাদে 'ম' 'স' 'জ' ও দুইটী 'গ' গণ থাকিলে 'ভদ্রবিরাট্' ছন্দ।

২৪৫। বিষম পাদে 'স' 'জ' 'স' ও গুরুবর্ণ এবং সমপাদে 'ভ' 'র' 'ন' 'গ' 'গ' গণ সন্নিবিষ্ট হইলে 'কেতুমতী' ছন্দ হয়।

२४६। "आख्यानकी" तौ जगुरू ग ओजे जतावनोजे जगुरू गुरुश्चेत्।

२४७। जतौ जगौ गो विषमे समे चेत् तौ ज्गौ ग एषा "विपरीतपूर्व्वा"।

२४८। स्यादयुग्मके रजौ रयौ समे चेद् जरौ जरौ गुरुर्ज्जवात् "परामतीयम्"।

इति वृत्तरत्नाकरे।

२४९। अयुजि ननभभाः समकेऽपि तु नयुगरयुगलं तदा "कौमुदी"।

२५०। यदि विषमे भवतो नजौ जरौ सजयाः समे तु रलौगो "मञ्जुसौरभम्"।

---

২৪৬। বিষমপাদে দুইটী 'ত' একটি 'জ' ও দুইটী গুরুবর্ণ এবং সমপাদে 'জ' 'ত' 'জ' ও দুইটী গুরুবর্ণ থাকিলে, 'আখ্যানকী' ছন্দ হয়।

২৪৭। বিষমপাদে 'জ' 'ত' 'জ' 'গ' 'গ' গণ সন্নিবিষ্ট এবং সমপাদে দুইটি 'ত' একটি 'জ' 'গ' 'গ' এই গণ গুলি সন্নিবিষ্ট হইলে 'বিপরীতপূর্ব্বা' ছন্দ হয়।

২৪৮। বিষমপাদে 'র' 'জ' 'র' 'য' এবং সমপাদে 'জ' 'র' 'জ' 'র' ও গুরুবর্ণ সন্নিবিষ্ট হইলে "পরামতী" ছন্দ হয় ( কেহ কেহ ইহাকে জবাৎপরামতী বলেন )

২৪৯। বিষমপাদে 'ন' 'ন' ভ' 'ভ' এবং সমপাদে দুইটী 'ন' দুইটি 'র' সন্নিবিষ্ট হইলে "কৌমুদী" ছন্দ।

২৫০। যদি বিষমপাদে 'ন' 'জ' 'জ' 'র' ও সমপাদে 'স' 'জ' 'য' 'র' 'ল' ও 'গ' সন্নিবিষ্ট হয়, তবে "মঞ্জুসৌরভ" ছন্দ হয়।

२५१ । विषमे ससजा यदा गुरू चेत् सभरा येन तु
"मा[का]लभारिणीयम्" ।

इति वृत्तरत्नाकरपरिशिष्टे ।

इति छन्दोमञ्जर्य्यामर्द्धसमाख्यस्तृतीयः स्तवकः ।

—*—

## चतुर्थः स्तवकः ।

—(*)—

### अथ विषमवृत्तम् ॥

स　ज　स ल　न　स　ज ग

२५२ । प्रथमे सजौ यदि सलौ च, नसजगुरुकाण्यनन्तरम् ।

भ　न　भ ग　स　ज　स　ज ग

यद्यथ भनभगाः स्युरथो, सजसा जगौ च भवतीय-"मुद्गता" ॥

। । S । S । । । S । । । । । । S । S । S

विललास गोपरमणीषु तरणितनया प्रमोद्गता ।

S । । । । । S । । S । । S । S । । । । । S । S ।

कृष्णनयनचकोरयुगे दधती सुधांशुकिरणोर्म्मिविभ्रमम् ।

२५२ । प्रथम इति ।—यदि प्रथमे पादे सजौ सलौ च स्याताम्, अनन्तरं द्वितीय-चरणे इत्यर्थः, नसजगुरुकाणि स्युः अथो अनन्तरं तृतीये पादे यदि भनभगाः स्युः अथो अनन्तरं चतुर्थे पादे सजसा जगौ च स्युस्तदा इयं उद्गता नाम वृत्तम्भवति ।

---

२৫১ । বিষমপাদে 'স' 'স' 'জ' ও দুইটী গুরুবর্ণ এবং সমপাদে 'স' 'ভ' 'র' ও 'য' গণ সন্নিবিষ্ট হইলে 'মালভারিণী' ছন্দ হয় ।

स ज स ल न स ज ग
२५३। प्रथमे सजौ यदि सलौ च, नसजगुरुकाण्यनन्तरम्।
भ न ज ल ग स ज स ज ग
यद्यथ भनजलगाः स्युरथो, सजसा जगौ च भवतीय-"मुद्गता"

।। ऽ । ऽ । ।।ऽ।। ।।। । ।ऽ ।ऽ।ऽ
अथ वासवस्य वचनेन, रुचिरवदनस्त्रिलोचनम्।
ऽ ।। ।।। ।ऽ । ।ऽ । । ऽ ।ऽ । ।। ऽ ।ऽ ।ऽ
क्लान्तिरहितमभिराधयितुं विधिवत्तपांसि विदधे धनञ्जयः।

इति भारवावुद्गताभेदः।

---

विललासेति।—प्रभया शोभया उद्गता उन्नता अथवा शोभां उद्गता प्राप्ता। अथवा उद्गता तरणितनयाप्रभा गोपरमणीषु साक्षात् स्थितासु अपि, अत्र सप्तमी अनादरे, गोपरमणीः अनादृत्य इत्यर्थः। कृष्णस्य नयने एव चकोरयुगं तस्मिन् सुधांशुकिरणोर्म्मिविभ्रमं सुधांशुकिरणास्वतभ्रमं दधती जनयन्ती विललास विरराज। श्रीकृष्णः गोपाङ्गनागणं परित्यज्य यमुनामेव सतृष्णं ददर्श इति भावः।

२५३। अन्यविधामुद्गतां दर्शयति—प्रथम इति।—अन्येषु त्रिषु पादेषु पूर्व्ववत् केवलं तृतीये पादे भनजलगानां समावेशात् पूर्व्वतो भेदः।

उदाहरति—अथेति।—अथ इन्द्रस्य प्रस्थानानन्तरं वासवस्य इन्द्रस्य वचनेन उपदेशेन रुचिरवदनः प्रसन्नमुखः धनञ्जयः अर्ज्जुनः त्रिलोचनं शिवं अभिराधयितुं प्रसादयितुं विधिवत् यथाविधि क्लान्तिरहितम् आयासमगणयित्वा। तपांसि तपस्याः विदधे चकार

---

২৫২। প্রথমপাদে 'স' 'জ' 'স' ও 'ল', দ্বিতীয়পাদে,'ন' 'স' 'জ' ও গুরুবর্ণ, তৃতীয় পাদে 'ভ' 'ন' 'ভ' 'গ' ও চতুর্থপাদে 'স' 'জ' 'স' 'জ' 'গ' গণ সন্নিবিষ্ট হইলে "উদ্গতা" ছন্দ হয়।

२५४ । त्रयमुद्गतासदृशमेव पदमिह तृतीयमन्यथा ।
जायते रनभगैर्ग्रथितं कथयन्ति "सौरभक"मेतदीदृशम् ॥

। । ऽ ।ऽ। । । ऽ । ।।।।ऽ।ऽ।ऽ

परिभूतफुल्लशतपत्त्रवनविस्तृतगन्धविभ्रमा ।
कस्य हृन्न हरतीह हरे मुखपद्मसौरभकला तवाद्भुता ॥

२५५ । नयुगं सकारयुगलञ्च भवति चरणे तृतीयके ।
तदुदितमुरुमतिभि"र्ललितं" यदि शेषमस्य सकलं
यथोद्गता ॥

---

२५४ । त्रयमिति ।—इह विषमवृत्ते त्रयमेव यदि त्रयं पादत्रयं उद्गतासदृशमेव जायते तृतीयं पदं पादः रनभगैर्निबद्धं सत् अन्यथा अन्यप्रकारं उद्गताभिन्नमित्यर्थः, जायते तदा ईदृशं एतत् वृत्तं सौरभकं नाम कथयन्ति ।

परिभूतेति । हे हरे ! परिभूतः पराजितः फुल्लानां विकसितानां शतपत्त्रवनानां पद्मवनानां विस्तृतगन्धविभ्रमः दिग्व्याप्तसौरभविलासः यया सा अद्भुता अतिविचित्रा एकस्यैव मुखपद्मस्य सौगन्ध्यलेशेन समस्तपद्मवनविसारिसौरभं पराभूतमिति देचित्र्यम् । तव मुखपद्मसौरभकला इह जगति कस्य हृत् चित्तं न हरति सर्व्वस्यै-वेत्यर्थः ।

२५५ । नयुगमिति ।—तृतीयके चरणे यदि नगणयुगं सगणयुगञ्च भवति, शेषः

---

২৫৩। উদ্‌গতার লক্ষণান্তর যথা—প্রথমপাদে 'স' 'জ' 'স' 'ল',
দ্বিতীয় পাদে 'ন' 'স' 'জ' গুরুবর্ণ, তৃতীয়ে 'ভ' 'ন' 'জ' 'ল' ও 'গ', চতুর্থে
'স' 'জ' 'স' 'জ' 'গ' গণ থাকিলে "উদ্‌গতা" হয়।

২৫৪। যাহার তিনটী পাদ উদ্‌গতা ছন্দের ন্যায় এবং তৃতীয় পাদটী অন্য প্রকার, 'র' 'ন' 'ভ' 'গ' দ্বারা রচিত হয়, ইহা 'সৌরভক' নামে কথিত।

व्रजसुन्दरीसमुदयेन मुदितमनसा स्म पीयते।
हिमकरगलितमिवामृतकं ललितं मुरारिमुखचन्द्रविद्रुतम्॥

भवत्यर्द्धसमं वक्त्रं विषमञ्च कदाचन।
तयोर्द्वयोरुपान्तेऽत्र छन्दस्तदधुनोच्यते॥ (क)

२५६। 'वक्त्र' युग्भ्यां मगौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम्।

वक्त्राम्भोजं सदा स्मेरं चक्षुर्नीलोत्पलं फुल्लम्।
वल्लवीनां मुरारातेश्चेतोभृङ्गं जहारोच्चैः॥

---

अन्यत् सकलं यथा उद्गता तथा भवति तदा उरुमतिभिः धीमद्भिः तद्वृत्तं ललितं नाम उदितं उक्तम्।

व्रजेति।—मुरारिमुखचन्द्रविद्रुतं श्रीकृष्णमुखचन्द्रनिःसृतं ललितं मनोज्ञं अमृतकं हिमकरगलितमिव चन्द्रविनिर्गतं अमृतमिव व्रजसुन्दरीसमुदयेन व्रजरमणी-समूहेन मुदितं प्रीतं मनो यस्य तथाभूतेन सता पीयते स्म।

(क) भवत्यर्द्धेति।—वक्त्रं वक्त्रनामकं वृत्तं कदाचन कदाचित् अर्द्धसमं विषमञ्च भवति, तयोर्द्वयोः वृत्तयोः उपान्ते सप्तमवर्णपर्य्यन्ते यत् छन्दः अक्षरविन्यासप्रणाली तत् अधुना उच्यते। उपान्ते इति कथनात् अन्ते कोऽपि नियमो नास्तीति अव-गन्तव्यम्।

---

२५५। যাহার তৃতীয় পাদে দুইটী 'ন' দুইটী 'স' এবং অপর ভাগ উদ্গতার তুল্য, তাহা পণ্ডিতগণকর্ত্তৃক "ললিত" নামে কথিত।

(ক) বক্ত্রনামক ছন্দ কখনও অৰ্দ্ধসম কখনও বিষম হইয়া থাকে। তাহার উপান্ত (সপ্তম বর্ণ পর্য্যন্ত) ছন্দোনিয়ম কথিত হইতেছে।

२५७। युजोश्चतुर्थतो जेन "पथ्यावक्त्र" प्रकीर्त्तितम् ॥

रासकेलिसतृष्णस्य कृष्णस्य मधुवासरे ।

आसीद् गोपमृगाक्षीणां पथ्या वक्त्रमधुस्रुतिः ॥

२५८। पञ्चमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः ।

गुरु षष्ठञ्च जानीयात् शेषेष्वनियमो मतः ॥

---

२५६। वक्त्रमिति।—अनुष्टुभि अष्टाक्षरघटिते वृत्ते युग्मयां द्वितीयचतुर्थपादाभ्यां य लोपे पञ्चमी, द्वितीयचतुर्थपादौ आश्रित्य सगौ स्यातां समयोः पादयोः प्रथमतश्चत्वारो वर्णा गुरवो गन्तनीयाः। अर्थ्यचतुर्थवर्णात् परं यः यगणः गन्तनीयः। एवञ्चेत् तदा वक्त्रं नाम ख्यातम्।

वक्त्राम्भोजमिति।—वल्लवीनां गोपाङ्गनानां सदा स्मेरं मन्दहासान्वितं विकसित-मित्यर्थः। मुखाम्भोजं तथा फुल्लं विकसितं चक्षुर्नीलोत्पलं मुरारातेः श्रीकृष्णस्य चेतोभृङ्गं उच्चैः सातिशयं जहार आचकर्ष।

२५७। युजोरिति।—युजोः समयोः पादयोः चतुर्थतश्चतुर्थाक्षरात् परं जेन जगणेन युक्तं पथ्यावक्त्रं नाम प्रकीर्त्तितम्। एतेन द्वितीयचतुर्थपादयोः पञ्चमसप्तम-वर्णौ लघू षष्ठो गुरुः अन्यत्र कोऽपि नियमो नास्तीति प्रतिपादितम्।

रासेति।—गोपमृगाक्षीणां गोपाङ्गनानां वक्त्रमधुस्रुतिः वदनसुधाविन्दुः मधुवासरे चैत्रमासीयदिवसे रासकेलिसतृष्णस्य रासक्रीड़ातृषान्वितस्य कृष्णस्य पथ्या अनुकूला आसीत्। गोपाङ्गनानां वदनसुधापानेनैव कृष्णस्य रासकेलितृष्णा निवृत्तेति।

२५८। पञ्चममिति।—सर्व्वत्र सर्व्वस्मिन् वक्त्रे श्लोके वा द्विचतुर्थयोः पादयोः पञ्चमं सप्तमञ्च अक्षरं लघु षष्ठञ्च अक्षरं गुरु जानीयात्, एतेन चतुर्थवर्णात् परं जगणः

---

২৫৬। যদি অষ্টাক্ষরবৃত্তে দ্বিতীয় ও চতুর্থ পাদে 'ম' 'গ' পরে চতুর্থা-ক্ষরের পর 'য' গণ থাকে, তবে তাহা "বক্ত্র" নামক ছন্দঃ।

২৫৭। সমপাদে চতুর্থাক্ষরের পর 'জ' গণ সন্নিবিষ্ট হইলে 'পথ্যাবক্ত্র' বৃত্ত হয়।

प्रयोगे प्रायिकं प्राहुः केऽप्येतद्वक्त्रलक्षणम्।
लोकेऽनुष्टुबिति ख्यातं तस्याष्टाक्षरता मता॥ *

इति वक्त्रम्।

इति छन्दोमञ्जर्यां विषमवृत्ताख्यश्चतुर्थः स्तवकः।

---

## पञ्चमः स्तवकः।

अथ मात्रावृत्तम्।

लक्ष्मैतत् सप्तगणा गोपेता भवति नेह विषमे जः।
षष्ठो जश्च नलघु वा प्रथमेऽर्द्धे नियतमार्य्यायाः॥ (क)

---

प्रयोक्तव्य इत्यायातम्। अत्र च प्रथमवर्णात् परं रगणो न प्रयोक्तव्य इति विशेषोऽवगन्तव्यः। शेषेषु अक्षरेषु अनियमः मतः नियमो नास्तीति ज्ञातव्यम्। प्रथमतृतीयपादे प्रथमाक्षरात् परं सनौ गणौ न प्रयोक्तव्यौ, चतुर्थवर्णात् परश्च मजौ न प्रयोक्तव्यौ इति नव्या मन्यन्ते, ग्रन्थकारस्तु शेषेष्वनियमो मत इत्युक्त्वा नव्यमतविरोध्येव।

* प्रयोग इति।—केऽपि पण्डिताः प्रयोगे श्लोके एतत् पूर्व्वकथितं वक्त्रलक्षणं प्रायिकं बहुलं प्राहुः कथयन्ति। लोके तु अनुष्टुप् इति वृत्तं कथितं तस्य अष्टाक्षरता मता अष्टाभिरक्षरैर्निबद्धमनुष्टुब्वृत्तं स्यात्।

---

(क) आर्य्यायाः प्रथमार्द्धं निरूपयति—लक्ष्मैतदिति।—गोपेताः अन्ते गुर्व्वक्षरयुक्ताः सप्तगणाः प्रथमार्द्धे प्रयोक्तव्याः। इह आर्य्यायाः प्रथमार्द्धे विषमे प्रथम-

---

২৫৮। অনুষ্টুভে সর্ব্বত্র পঞ্চম বর্ণ লঘু, দ্বিতীয় ও চতুর্থ পাদের সপ্তমাক্ষর লঘু, এবং ষষ্ঠাক্ষর গুরু; অবশিষ্ট বর্ণে বিশেষ কোনও নিয়ম নাই।

* শ্লোকের প্রয়োগে কেং কেহ এই বক্ত্রলক্ষণ প্রায়িক বলেন, উহা অনুষ্টভ্ বলিয়া খ্যাত এবং তাহাতে 'অষ্টাক্ষরতা' আছে।

**षष्ठे द्वितीयलात् परके न्ले सुखलाच्च सयतिपदनियमः ।**
**चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥ (ख)**

तृतीयपञ्चमसप्तमगणेषु जः आद्यन्तलघुमध्यगुरुरूपो जगणः न भवति। षष्ठो गणः जस्तु पूर्व्वोक्तो जगणो वा नलघु चतुर्लघुरूपो लघुसहितनगणो वा भवति। नश्च लघुश्च तयोः समाहारः नलघु। आर्य्याया एतत् लक्ष्म लक्षणं नियतं निश्चितं भवति। सप्तगणा इति।—'ज्ञेयाः सर्व्वादिमध्यान्तगुरवोऽत्र चतुष्कलाः।' इति पूर्व्वोक्तचतुर्मात्रात्मकसप्तगणाः। "एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते"इत्येकमात्रया एकलघुः, मात्राद्वयेन च एकगुरुर्ज्ञातव्यः। एतेन लघुचतुष्टयं लघुद्वयसहितैकगुरुः गुरुद्वयं वा चतुष्कलगणो वोध्यः, यथा,—क्षणः १ (SS) श्रियः सु २ (ISI) तो मे ३ (SS) वल्लवः ४ (SIS) कुलटा ५ (IIS) भिराह्व (IS) ६ तो न ट ७ हे इति अन्ते गोपेतः एवं सप्तगणा गणनीयाः। गोपेता इति मात्राद्वयोपलक्षणम् तेन अन्ते लघुद्वये प्रयोक्तव्येऽपि न क्षतिः। अतएव सर्वलघुरपि आर्य्या भवतीति केचिन्मन्यन्ते, अपरे तु आर्य्याया दीर्घान्तता नियतेति कथयन्ति।

(ख) आर्य्यायां यतिनियममाह—षष्ठे इति।—षष्ठे गणे न्ले । । । । नगणसहितले चतुर्लघुरूपे सति। नश्च लश्च तयोः समाहारः न्लं तस्मिन्। द्वितीयलात् द्वितीयलघोः पूर्व्वं सयतिपदनियमः यतिः प्रयोक्तव्या इत्यर्थः। परके सप्तमे गणे न्ले सति सुखलात् प्रथमलघुवर्णात् पूर्व्वं सयतिपदनियमः। एतेन यदा षष्ठगणश्चतुर्लघुरूपो भवति तदा प्रथमलघौ यतिः। यदा तु सप्तमगणश्चतुर्लघुरूपः तदा षष्ठगणात् परमेव यतिः प्रयोक्तव्या इति विस्पष्टार्थः। आर्य्यायाः शेषार्द्धं लक्षयति—चरमे इति। चरमेऽर्द्धे शेषार्द्धे षष्ठो गणः लः एकलघुर्भवति। अन्यत् सर्व्वं प्रथमार्द्धवत् ज्ञेयम्। परार्द्धेऽपि यतिनियमो यथा—चरमेऽर्द्धे परार्द्धे पञ्चमके गणे न्ले सति तस्मात् प्रथमलघुवर्णात्

---

(क) আর্য্যার প্রথমার্দ্ধে অন্তে একটী গুরুযুক্ত সপ্ত গণ সন্নিবিষ্ট হইবে। প্রথমার্দ্ধস্থিতপাদে প্রথম, তৃতীয়, পঞ্চম ও সপ্তম গণে আদ্যন্ত লঘু মধ্যগুরু 'জ' গণ সন্নিবিষ্ট হয় না। অপরার্দ্ধে ষষ্ঠ গণ পূর্ব্বোক্ত 'জ' ও 'ন' লঘু

আর্য্যার

कृष्णः शिशुः सुतो मे वल्लवकुलटाभिराहृतो न गृहे।
क्षणमपि वसत्यसाविति जगाद गोष्ठ्यां यशोदार्य्या॥
वृन्दावने सलीलं वद्ध्वा द्रुमकाण्डनिहिततनुयष्टिः।
स्मेरमुखार्पितवेणुः कृष्णो यदि मनसि कः स्वर्गः॥

**पथ्या विपुला चपला मुखचपला जघनचपला च।**
**गीत्युपगीत्युद्गीतय आर्य्यागीतिश्च नवधार्य्या॥ (ग)**

---

पूर्व्वे चतुर्थगणान्ते सयतिपदनियमः। अत्र षष्ठगणस्य एकमात्रारूपत्वेन परार्द्धे मात्रात्रयह्रासः। तेन पूर्व्वार्द्धे त्रिंशन्मात्राः परार्द्धे सप्तविंशतिमात्राः। एतेन आर्य्या-सप्तपञ्चाशन्मात्राघटितं स्यादिति आर्य्याया भागद्वयं तदन्ते यतिरिति केषाञ्चिन्मतम्। बहवस्तु आर्य्यायाः पादचतुष्टयं तदन्ते यतिनियम इति कथयन्ति, 'युगलेषु पादः स्या'दित्यग्निपुराणोक्तेः परपक्ष एव समीचीनतया प्रतिभाति। गुरुलघुभेदेन आर्य्याया बहुधा संज्ञाभेदः पिङ्गलादावनुसन्धेयः। विषमपादस्थजगणस्य दोषो यथा—"यस्याः प्रथमतृतीयपञ्चमसप्तमस्थानेषु जगणो निबध्यते सा आर्य्या गुर्व्विणीव गुणरहिता रसा-नङ्गुणा दोषमावहति" इत्यादि।

(ग) कृष्ण इति।—आर्य्या सम्मानार्हा यशोदा नन्दपत्नी गोष्ठ्यां रमणीसमाजे इति वक्ष्यमाणं जगाद कथयामास, यथा,—मे मम असौ शिशुः ननु प्रवीणः सुतः कृष्णः वल्लवकुलटाभिः गोपजातीयदुश्चरित्राभिः रमणीभिः आहृतः छलेन स्थानान्तरं नीतः अतएव क्षणमपि गृहे न वसति न तिष्ठति। अत्र चतुष्कलविच्छेदो यथा—

---

(খ) ষষ্ঠ গণে 'ন' ও 'ল' অর্থাৎ চারিটি লঘু থাকিবে, দ্বিতীয় লঘুর পূর্ব্বে যতি নিয়ম থাকিবে, সপ্তমগণে 'ন' 'ল' ও প্রথম লঘুর পূর্ব্বে যতি থাকিবে। ইহাতে যখন ষষ্ঠ গণ চারিটী লঘুরূপ হইবে; তখন প্রথম লঘুতে যতি এবং সপ্তম গণ চারিটী লঘুরূপ হইলে ষষ্ঠ গণের পরই যতি। চরমার্দ্ধে পঞ্চম গণে 'ন' 'ল' থাকিলে প্রথম লঘুবর্ণের পূর্ব্বে চতুর্থ গণের অন্তে যতি থাকিবে। ষষ্ঠ গণ একমাত্রক বলিয়া পরার্দ্ধে তিনটী মাত্রা কম।

प्रथमगणत्रयविरतिर्दलयोरुभयोः प्रकीर्त्तिता "पथ्या" ॥ (घ)

जय जय नाथ ! सुरारे ! केशव ! कंसान्तकाच्युतानन्त !

कुरु करुणामिति भणितिः पथ्या भवरोगदुःस्थानाम् ॥

---

कृष्णः १ । शिशुः सु २ । तो मे ३ । प्रथमः पादः वल्लव ४ । कुलटा ५ । भिराह ६ । तोनट ७ । है । ग । द्वितीयः पादः । इति प्रथमार्द्धे अन्ते गोपेताः चतुष्कलाः सप्तगणाः । चणमपि १ । वसत्य २ । साविति ३ । जगाद ४ । गोष्ठ्यां ५ । य ६ । इति षष्ठो लः । शोदा ७ । थ्यां ग । इति द्वितीयार्द्धे एकलघुरूपषष्ठगणयुक्ता अन्ते गोपेताः चतुष्कलाः सप्तगणाः । इति जगणषष्ठार्य्या ।

इदानीं नलघुषष्ठामार्य्यां प्रदर्शयति—वृन्दावन इति ।—वृन्दावने वल्गुद्रुमकाण्डे मनोज्ञपादपस्कन्धे सलीलं सविलासं निहिता अर्पिता स्थापितेति यावत् तनुयष्टिर्येन सः स्मेरसुखे ईषद्धास्यान्वितमुखे हि अर्पिता वेणुर्वंशी येन सः कृष्णः यदि मनसि वर्त्तते तिष्ठति तदा स्वर्गः कः । एतत् सुखमेव स्वर्गादुत्तमम् । मात्राच्छेदो यथा—वृन्दा १ । वनेस २ । लीलं ३ । वल्गु ४ । द्रुमका ५ । ण्ड निहित ६ । इति नलघुषष्ठा । तनुय ७ । ष्टिः—ग । अन्ते गोपेताः स्मेरसु १ । खार्पित २ । वेणुः ३ । कृष्णो ४ । यदि मन ५ ॥ इति नलघुपञ्चमका सि ६—ल । इति षष्ठोलः । कः स्व ७ । र्गः—ग इति अन्त गोपेताः ।

(घ) । पथ्येति ।—पथ्यादिभेदेन आर्य्याया नव भेदाः तत्र उभयोः दलयोः प्रथमार्द्धशेषार्द्धयोः प्रथमगणत्रयपरं विरतिर्यतिश्चेत् पथ्या नाम प्रकीर्त्तिता ।

जयेति पथ्योदाहरणम् । हे मुरारे ! केशव ! नाथ ! कंसान्तक ! अच्युत ! अनन्त ! जय, जय, करुणां कृपां कुरु इति भणितिः स्तुतिः भवरोगदुःस्थानां संसारपीड़ापीड़ितानां पथ्या हितकारिणी भवति । श्रीहरिनामसङ्कीर्त्तनमेव भवरोगमहौषधमिति भावः । अत्र रारे इति भणितिरिति च प्रथमद्वितीयार्द्धचतुष्कलात्मकगणत्रयान्ते विरामात् पथ्यानामार्य्येयम् ।

---

(গ) আর্য্যার নয় প্রকার ভেদ যথা—পথ্যা, বিপুলা, চপলা, মুখচপলা, জঘনচপলা, গীতি, উপগীতি, উদ্গীতি ও আর্য্যাগীতি।

(ঘ) প্রথমার্দ্ধ ও শেষার্দ্ধের প্রথম গণত্রয়ের পর বিরতি থাকিলে 'পথ্যা' হয়।

संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः।
यस्यास्तां पिङ्गलनागो "विपुला"मिति समाख्याति॥ (ङ)

पुंसां कलिकालव्यालहतानां नास्त्युपहतिरल्पापि।
वीर्य्यविपुला मुखे चेत् स्याद्गोविन्दाख्यमन्त्रकला॥

दलयोर्द्वितीयतूर्य्यौ गणौ जकारौ तु यत्र "चपला" सा। (च)

द्विरावृत्त्य श्लोकः पूरयितव्यः।

चपला न चेत् कदाचिन्नृणां भवेद्भक्तिभावना कृष्णे।
धर्म्मार्थकाममोक्षास्तदा करस्था न सन्देहः॥

---

(ङ)। संलङ्घ्येति।—यस्या आर्य्याया: द्वयोः शकलयोः खण्डयोः पूर्व्वार्द्धपरार्द्धयो-रित्यर्थः, आदिमं आद्यं गणत्रयं संलङ्घ्य पादो भवति पिङ्गलनागः तां आर्य्यां विपुलां नाम समाख्याति कथयति। लक्षणेऽस्मिन् पादः पञ्चमगणान्तः कृत इति।

पुंसामिति। चेत् यदि कलिकाल एव व्यालः सर्पः तेन हतानां दष्टानां पुंसां मुखे वीर्य्यविपुला अतितेजस्विनी गोविन्दाख्यमन्त्रकला गोविन्दनामरूपमन्त्रकीर्त्तनं भवतीति शेषः. तदा अल्पापि उपहतिः क्षतिः नास्ति। कलिकालकालसर्पदंशनात मृत्युस्तु दूरे आस्तां विषज्वालादिरूपा किञ्चित् क्षतिरपि न स्यादिति।

(च) दलयोरिति। यत्र आर्य्यायां दलयोः पूर्व्वापरयोः खण्डयोः द्वितीयतूर्य्यौ गणौ जकारौ स्यातां सा चपला नाम भवेत्।

चपलेति। येषां जनानां कृष्णे भक्तिभावना भक्तियुक्ता चिन्ता कदाचिदपि चपला चञ्चला न चेत् भवेत् तदा तेषां जनानां धर्म्मार्थकाममोक्षाः करस्थाः वशीभूताः। न सन्देहः अत्र सन्देहो नास्तीत्यर्थः।

---

(ঙ) প্রথম গণত্রয় অতিক্রম করিয়া যদি দুই অর্দ্ধেই পাদ হয়, তবে তাহাকে পিঙ্গলনাগ 'বিপুলা' বলিয়া থাকেন।

( চ ) যদি দুই পাদে দ্বিতীয় ও চতুর্থ গণ জকারদ্বয় থাকে, তবে তাহা 'চপলা'।

आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः ।
शेषः पूर्वजलक्ष्मा "मुखचपला" सोदिता मुनिना ॥ (छ)

नन्दसुत ! वञ्चकस्त्वं दृढ़ं न ते प्रेम गच्छ तत्रैव ।
यत्र भवति ते रागः कापि जगादेति मुखचपला ॥

प्राक्प्रतिपादितमर्द्धे प्रथमे प्रथमेतरे च चपलायाः ।
लक्ष्माश्रयेत सोक्ता विशुद्धधीभि-"र्जघनचपला" ॥ (ज)

कृष्णः शृङ्गारपटुर्यौवनमदरागचपलललिताङ्गः ।
आसीद् व्रजाङ्गनानां मनोहरो जघनचपलानाम् ॥

---

(छ) आद्यमिति ।—यस्या आद्यं प्रथमं दलं पूर्वार्द्धमित्यर्थः, समस्तं चपलागतं लक्ष्म लक्षणं भजेत आश्रयेत चपलावत् यस्याः प्रथमार्द्धं भवेदित्यर्थः । शेषः उत्तरार्द्धं पूर्वजलक्ष्मा पूर्वकथितार्य्यापरार्द्धलक्षणान्विता सती मुखचपला मुखे प्रथमे चपला यस्याः सा मुनिना पिङ्गलेन उदिता कथिता ।

नन्दसुतेति ।—हे नन्दसुत ! त्वं वञ्चकः प्रतारकः असि इति शेषः, ते तव प्रेम प्रणयः न दृढ़ं स्थिरम् । यत्र ते तव रागः अनुरागः भवति तत्रैव गच्छ इति, एवम्प्रकारं मुखचपला मुखरा कापि गोपाङ्गना जगाद कथयामास । अत्र प्रथमार्द्धं चपलावत् द्वितीयार्द्धन्तु पूर्वोक्तार्य्यापरार्द्धलक्षणाक्रान्तमिति ।

(ज) प्रागिति ।—या प्रथमे अर्द्धं प्राक्प्रतिपादितं पूर्व्वकथितं लक्ष्म आर्य्या-पूर्व्वार्द्धलक्षणं प्रथमेतरे द्वितीयार्द्धं चपलाया लक्ष्म लक्षणं च आश्रयेत भजेत सा जघनचपला जघने शेषार्द्धे चपला यस्याः सा नाम विशुद्धधीभिः पण्डितैः उक्ता ।

उदाहरति—कृष्ण इति ।—यौवनस्य मदेन चपलं ललितञ्च अङ्गं यस्य सः शृङ्गारपटुः सुरतनिपुणः कृष्णः जघनचपलानां नृत्यन्तीनामित्यर्थः, व्रजाङ्गनानां मनोहरः चित्ताकर्षक आसीत् ।

---

(छ) যাহার আদ্য অংশ চপলার লক্ষণে লক্ষিত ও অবশিষ্টভাগ পূর্ব্বোক্ত আর্য্যালক্ষণাক্রান্ত, তাহা "মুখচপলা' বলিয়া খ্যাত।

(জ) প্রথম অর্দ্ধে পূর্ব্বপ্রতিপাদিত আর্য্যালক্ষণ ও দ্বিতীয়ার্দ্ধে চপলার লক্ষণ সঙ্গত হইলে তাহা "জঘনচপলা" ।

(झ) आर्य्या प्रथमार्द्धसमं यस्या अपरार्द्धमाह तां "गीतिम्॥"

केशववंशीगीतिर्लोकमनोहरिणहारिणी जयति।
गोपीमानग्रन्थेर्विमोचनी दिव्यगायनाश्चर्य्या॥

(ञ) आर्य्यापरार्द्धतुल्ये दलद्वये प्राहु-"रुपगीतिम्॥"

नवगोपसुन्दरीणां रासोल्लासे मुरारातिम्।
अस्मारयदुपगीतिः स्वर्गकुरङ्गीदृशां गीतेः॥

(ट) आर्य्याशकलद्वितये विपरीते पुनरि-"होद्‌गीतिः॥"

नारायणस्य सन्ततमुद्‌गीतिः संस्मृतिर्भक्त्या।
अर्च्चायामासक्तिर्दुस्तरसंसारसागरे तरणिः॥

---

(झ) आर्य्येति।—यस्याः अपरार्द्धं शेषार्द्धं आर्य्यायाः प्रथमार्द्धसमं भवति, तां गीतिं आह कथयति।

उदाहरति—केशवेति।—गोपीनां मानग्रन्थेः मानरूपबन्धनस्य अथवा मानग्रन्थेः मान-क्रियायाः विमोचनी छेदिका विनाशिका इत्यर्थः, लोकस्य मन एव हरिणः तं हर्त्तुं वशीकर्त्तुं शीलमस्याः लोकमनोहरिणहारिणी, वंशीरवश्रवणात् हरिणा मुग्धा भवन्तीति प्रसिद्धिः। दिव्यगायनाः स्वर्गीयगायका ये गन्धर्व्वादयः तेषां आश्चर्य्या विस्मयोत्पादिका केशववंशीगीतिर्जयति।

(ञ) आर्य्येति।—यस्या दलद्वये पूर्व्वार्द्धे परार्द्धे च आर्य्यापरार्द्धतुल्ये स्यात्तां तां उपगीतिं प्राहुः कथयन्ति।

उदाहरति—नवेति।—रासोल्लासे रासक्रीड़ायां नवगोपसुन्दरीणां युवतीनां गोप-रमणीनां उपगीतिः गानं कर्त्री मुरारातिं श्रीकृष्णं स्वर्गकुरङ्गीदृशां अप्सरसां गीतेः गीतिमित्यर्थः अस्मारयत्। श्रीकृष्णः गोपाङ्गनानां गीतिं श्रुत्वा अप्सरसां तां सुमधुरां गीतिं मनसि अकरोत्। अप्सरसां गानमिव गोपाङ्गनानां गानमिति भावः।

---

(ঝ) যাহার প্রথমার্দ্ধের তুল্য অপরার্দ্ধ, ঈদৃশ আর্য্যাকে 'গীতি' কহে।
(ঞ) আর্য্যার পরার্দ্ধের-তুল্য দুইটী অর্দ্ধ হইলে তাহাকে 'উপগীতি' কহে।

(ठ) आर्य्याप्राग्दलमन्तेऽधिकगुरुतादृगपरार्द्ध-"मार्य्यागीतिः" ॥

द्विराहत्त्या श्लोकः पूरणीयः ।

हर्षाश्रुस्तिमितदृशः प्रमोदरोमाञ्चकञ्चुकाञ्चितदेहाः ।
आर्य्यागीतिं भक्त्या गायन्ति श्रीपतेश्चरितसम्बद्धाम् ॥

चारुसमीरणरमणे हरिणकलङ्ककिरणावली सविलासा ।
आवद्धराममोहा वेलामूले विभावरी परिहीणा ॥

इति भट्टी । १२—१ ॥

इत्यार्य्या ।

---

(ट) उद्गीतिलक्षणमाह—आर्य्याशकलेति ।—आर्य्याशकलद्वितये आर्य्यायाः उत्तरखण्डे विपरीते सति आर्य्यायाः परार्द्धस्य पूर्व्वार्द्धत्वे पूर्व्वार्द्धस्य च परार्द्धत्वे इत्यर्थः, उद्गीतिर्नाम वृत्तं स्यात् । यथा—नारायणस्येति ।—सन्ततं अनवरतं भक्त्या भक्तिपूर्व्वकमित्यर्थः, नारायणस्य नारायण इति नाम्नः उद्गीतिः उच्चैर्गानं तथा स्मृतिः स्मरणं तथा अर्चायां पूजायां नारायणस्येति शेषः, आसक्तिः एकाग्रता दुस्तरसंसारसागरे तरणिर्नौकास्वरूपा भवेदित्यर्थः ।

(ठ) आर्य्याप्रागिति ।—आर्य्याप्राग्दलं आर्य्यायाः पूर्व्वार्द्धं अन्ते अधिकं गुरु यस्य तथाविधं यदि स्यात् एवं उत्तरार्द्धमपि चेत्तदा आर्य्यागीतिर्नाम वृत्तं स्यात् । यथा—हर्षेति । हर्षाश्रुभिः स्तिमिता आर्द्रीभूता दृशो नेत्राणि येषां ते प्रमोदरोमाञ्चैरेव कञ्चुकैः प्रच्छदपटविशेषैः अञ्चितौ भूषितौ देहौ येषां तथाविधा आर्य्याः भक्ता इत्यर्थः, भक्त्या श्रीकृष्णस्य चरितसम्बद्धां चरित्रविषयां गीतिं गायन्ति ।

चार्व्विति ।—श्रीरामः पल्लवशयनमध्यस्थादिति पूर्व्वमुक्तं साम्प्रतं नियमपूर्व्वकं सुप्तवतस्तस्य प्रभातमभूदिति वर्णयति—चार्व्विति । रमयतीति रमणं, चारुणा मनोहरेण समीरणेन पवनेन रमणं मनोहरं तस्मिन् वेलामूले समुद्रतीरसमीपे हरिणकलङ्कस्य चन्द्रस्य किरणावलीभिः सविलासा भासुरा अत एव आवद्धो जनितः रामस्य मोहो मूर्च्छा यया तादृशी विभावरी रात्रिः परिहीणा गतवती ।

---

(ट) আর্য্যার পূর্ব্বার্দ্ধ পরার্দ্ধের বিপরীত হইলে (অর্থাৎ পূর্ব্বার্দ্ধ পরার্দ্ধ, পরার্দ্ধ পূর্ব্বার্দ্ধ হইলে) তাহা 'উদ্গীতি'।

(ঠ) যদি আর্য্যার প্রথমার্দ্ধ ও দ্বিতীয়ার্দ্ধের অন্তে একটী অধিক গুরুবর্ণ থাকে, তবে তাহা 'আর্য্যাগীতি'।

अथ वैतालीयम् ।

२५९ । षड् विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तरा. ।
न समात्र पराश्रिता कला "वैतालीये"ऽन्ते रलौ गुरुः ॥
घसृणेन मदेन चर्चितं तव यन्निन्दति राधिके कुचम् ।
मुदमातनुतेऽत्र पाकिमं वै तालीयमिदं फलं हरेः ॥

२६० । तत्रैवान्तेऽधिके गुरौ स्या"दौपच्छन्दसकं" कवीन्द्रहृद्यम्
द्विराहृत्या श्लोकः पूरणीयः ।
आतन्वानं सुरारिकान्तास्वौपच्छन्दसकं हृदो विनोदम् ।
कंसं यो निर्जघान देवो वन्दे तं जगतां स्थितिं दधानम् ॥

—०—

२५९ । इदानीं वैतालीयं लक्षयति—षड़िति ।—विषमे पादे षट् कलाः मात्राः समे पादे अष्टौ ताः कलाः आदौ प्रयोज्याः इति शेषः । अन्ते षट्कलान्ते अष्ट-कलान्ते च रलौ गुरुः रलगाः प्रयोज्याः । एतेन प्रथमतृतीयपादयोश्च चतुर्द्दशमात्रा-भवेयुः, द्वितीयचतुर्थयोश्च पादयोः षोड़शमात्रा भवेयुः. एतत् वैतालीयस्य लक्षणम् । परन्तु अत्र वैतालीये समे द्वितीये चतुर्थे च पादे ताः प्रथमतः प्रयुक्ताः अष्ट कला नो निरन्तराः केवललघुरूपाः केवलगुरुरूपाश्च न भवेयुः, लघुगुरुमिश्रिता एव प्रयोक्तव्या इत्यर्थः । अत्र कलासु मध्ये समा द्वितीयाद्या कला पराश्रिता न कार्य्या । द्वितीय-तृतीयकलयोरेकगुरुर्न कार्य्य इत्यर्थः । एवं चतुर्थीपञ्चमीकलयोः षष्ठीसप्तमीकलयोश्च ।

उदाहरति—घुसृणेति ।—हे राधिके ! यत् तालीयफलं घुसृणेन कुङ्कुमेन, मदेन कस्तूरिकया च चर्च्चितं लिप्तं तव कुचं निन्दति अनुकरोति । निन्दादेपाद्यर्थ-कानि पदानि सादृश्यार्थवाचकानि । अत्र अधुना पाकिमं पक्वं इदं तालीयफलं तालफलं हरेः श्रीकृष्णस्य मुदं आनन्दं आतनुते जनयति । वै पादपूरणे । "वै स्यात् सम्बोधने पादपूरणेऽनुनयेऽपि"चेति मेदिनी ।

२६० । तत्रेति ।—तत्रैव वैतालीये वृत्ते अन्ते गुरौ एकस्मिन् वर्णे अधिके सति कवीन्द्रहृद्यं कवीन्द्रप्रियं औपच्छन्दसकं नाम वृत्तं स्यात् । औपच्छन्दसिकमिति केचित् पाठमामनन्ति ।

५९ । বিষমে পাদে ছয়টী মাত্রা এবং সমপাদে আটটী মাত্রা, ছয় ও আট মাত্রার অন্তে 'র' 'ল' 'গ' অর্থাৎ প্রথম ও তৃতীয় পাদে চতুর্দ্দশ-মাত্রা এবং দ্বিতীয় চতুর্থপাদে ষোড়শ মাত্রা হইলে, উহা 'বৈতালীয়'।

अथ पज्झटिका ।

प्रतिपदयमकितषोड़शमात्रा नवमगुरुत्वविभूषितगात्रा ।
"पज्झटिका" पुनरत्र विवेकः क्वापि न मध्यगुरुर्गण एकः ॥

तरलवतंसाश्लिष्टस्कन्धश्चलतरपज्झटिकाकटिबन्धः ।
मौलिचपलशिखिचन्द्रकवृन्दः कालियशिरसि ननर्त्त मुकुन्दः ॥

---

उदाहरति—आतन्वानमिति ।—यः देवः सुरारिकान्तासु दानवरमणीषु औपच्छन्दसकं इच्छानुरूपं उपच्छन्दसः अयम् औपच्छन्दसः तम् । "अभिप्रायश्छन्द आशयः" इत्यमरः । हृद्यं विनोदं चित्तविनोदं आतन्वानं कुर्व्वन्तं कंसं निर्ज्जघान हतवान्, जगतां निखिलपदार्थानां स्थितिं विद्यमानताम् दधानं धारयन्तं विश्वम्भरत्वात् । अथवा स्थितिं मर्य्यादाम् । तं देवं वन्दे प्रणमामि ।

२६१ । पज्झटिकां लक्षयति—प्रतिपदेति । प्रतिपदं प्रतिपादं यमकिता युग्मविच्छिन्ना षोड़शमात्रा यत्र सा यदा अयुग्ममात्राया गुरुत्वं तदा युग्मे विच्छेदः कर्त्तव्यः, विच्छिन्ना षोड़शमात्रा यत्र सा यदा अयुग्ममात्राया गुरुत्वं तदा युग्मे विच्छेदः कर्त्तव्यः, अयुग्मयुग्ममात्रयोरेकगुरुः न तु युग्मायुग्मयोरिति । युग्ममात्राया गुरुत्वे तु न तथेति नवमस्य नवममात्रायाः गुरुत्वेन गुरुत्वविन्यासेन विभूषितं गात्रं यस्याः सा पज्झटिका नाम भवति । अत्र एषः विवेकः विवेचना । क्वापि चरणे एकः मध्यो गुरुर्यस्य सः मध्यगुरुर्जगण इत्यर्थः, न भवेत् । जगणवर्ज्जितेन लगणचतुष्टयमगणद्वयेन लचतुष्कलादिकैश्च पज्झटिका भवेदिति ।

उदाहरति—तरलेति । तरलवतंसेन चञ्चलकर्णभूषणेन आश्लिष्टस्कन्धः संस्पृष्टस्कन्धस्थानः । चलतरा अतिचञ्चला पज्झटिका क्षुद्रघण्टिका कटिबन्धे कटिस्थाने यस्य सः । मौलौ चूड़ायां चपलं चञ्चलं शिखिनः मयूरस्य चन्द्रकवृन्दं मेचकावली यस्य सः । मुकुन्दः श्रीकृष्णः कालियशिरसि कालियनागमस्तकोपरि ननर्त्त नृत्यं कृतवान् ।

---

২৬০। উক্ত বৈতালীয় ছন্দের অন্তে একটী অধিক গুরুবর্ণ থাকিলে উহা 'ঔপচ্ছন্দস[সি]ক' নামে কথিত।

২৬১। প্রতিপাদে যদি যুগ্মবর্ণে যতি ও ষোড়শ মাত্রা থাকে এবং নবম মাত্রা গুরু হয়, তবে তাহা 'পজ্‌ঝটিকা'। ইহাতে মধ্যগুরু গণ থাকিবে না।

